नुपलम्भात्। विधिनिषेधज्ञानयोश्चान्योन्यं विरोधात्[१][२] कथमेकस्मात्सम्भवः[३]?

यदि च गोशब्देनागोशब्दनिवृत्तिर्मुख्यतः प्रतिपद्यते[४]; तर्हि गोशब्दश्रवणानन्तरं[५] प्रथमतरम्[६] 'अगौः[७]' इत्येषा श्रोतुः प्रतिपत्तिर्भवेत्। न चैवम्, अतो[८] गोबुद्ध्यनुत्पत्तिप्रसङ्गात्[९]। तदुक्तम्—

"नन्वन्यापोहकृच्छब्दो[१०] युष्मत्पक्षे[११]ऽनुवर्णितः[१२]।
निषेधमात्रं नैवेह[१३] प्रतिभासेऽवगम्यते ॥ १ ॥
किन्तु[१४] गौर्गवयो हस्ती वृक्ष इत्यादिशब्दतः।
विधिरूपावसायेन[१५] मतिः शाब्दी प्रवर्त्तते ॥ २ ॥"

[ तत्त्वसं० का० ९१०-११ पूर्वपक्षे ]

"यदि गौरित्ययं शब्दः समर्थोऽन्य[१६]निवर्त्तने[१७]।
जनको गवि गोबुद्धि(द्धे)र्मृग्यतामपरो ध्वनिः ॥ ३ ॥
ननु[१८] ज्ञान[१९]फलाः शब्दा न चैकस्य[२०] फलद्वयम्[२१]।
अपवाद[२२]विधिज्ञानं फलमेकस्य[२३] वः[२४] कथम् ॥ ४ ॥
प्राग[२५]गौ[२६]रिति विज्ञानं गोशब्दश्राविणो[२७] भवेत्।
येना[२८]ऽगोः प्रतिषेधाय प्रवृत्तो गौरिति ध्वनिः ॥ ५ ॥"

[ भामहालं० ६।१७-१९ ]

किञ्च, अपोहलक्षणं सामान्यं वाच्यत्वेना[२९]भिधीयमानं[३०] पर्युदासलक्षणं चाभिधीयेत, प्रसज्यलक्षणं वा? प्रथमपक्षे सिद्धसाध्यता[३१]–यदेव ह्यगोर्निवृत्तिलक्षणं सामान्यं गोशब्देनोच्यते भवता[३२] तदेवास्माभि[३३]र्गोत्वाख्यं भाव[३४]लक्षणं सामान्यं गोशब्दवाच्यमित्यभिधीयेत, अभावस्य भावान्तरात्मकत्वेन व्यवस्थितत्वात्[३५]।

कश्चायं भवतामश्वादिनिवृत्तिस्वभावो भावोऽभिप्रेतः? न तावदसाधारणो गवादिस्वलक्षणात्मा[३६]; तस्य सकलविकल्पगोचराति-

---

१ परस्परविरुद्धार्थप्रतिपादनविरोधात्। २ यत्र विधिविज्ञानं तत्र निषेधविज्ञानं नास्ति। यत्र निषेधज्ञानं न तत्र विधिज्ञानमिति। ३ बुद्धिद्वयस्य। ४ परेण भवता। ५ अगोः निवृत्तेः पूर्वम्। ६ एव। ७ अश्वादिः। ८ अन्यथा। ९ गौरिति बुद्धिस्तस्या अनुत्पत्तिः। १० तं करोतीति। ११ बौद्ध। १२ प्रतिपादितः। १३ गौरयमित्यस्मिन्। १४ तर्हि कथं प्रतिभासः?। १५ अर्थस्य। १६ अश्वादि। १७ तर्हि। १८ भवन्तु। १९ विधिनिषेधज्ञान। २० शब्दस्य। २१ विधिनिषेधलक्षणम्। २२ निषेध। २३ शब्दस्य। २४ बौद्धानाम्। २५ अगोर्निवृत्तेः पूर्वम्। २६ अश्वः। २७ जनस्य। २८ कुतः। २९ गोशब्दस्यार्थत्वेन। ३० बौद्धमते। ३१ कथम्। ३२ सौगतेन। ३३ जैनैः। ३४ सत्ता। ३५ अगोनिवृत्तिलक्षणोऽभावो भावान्तरेण गोत्वेन व्यवतिष्ठते। ३६ क्षणिकनिरंशनिरन्वयरूपः।

क्रान्तत्वात्[1]। नापि शावलेयादिव्यक्तिविशेषैः; असामान्यप्रसङ्गतः[2]। यदि गोशब्दः शावलेयादिवाचकः[3] स्यात्तर्हि तस्यानन्वयान्न[4] स सामान्यविषयः स्यात्[5] । तस्मात्सर्वेषु सजातीयेषु शावलेयादिपिण्डेषु यत्प्रत्येकं[6] परिसमाप्तं तन्निबन्धना गोबुद्धिः, तच्च गोत्वाख्यमेव सामान्यम् । तस्याऽगोऽपोह[7]शब्देनाभिधानान्नाममात्रं भिद्येत[8] । उक्तञ्च—

"अगोनिवृत्तिः सामान्यं वाच्यं[9] यैः[10] परिकल्पितम् ।
गोत्वं वस्त्वेव तैरुक्तमगोपोहगिरा स्फुटम्[11] ॥ १ ॥
भावान्तरात्मकोऽभावो येन[12] सर्वो व्यवस्थितः ।
तत्र[13]ाश्वादिनिवृत्त्यात्मा भावः क इति कथ्यताम् ॥ २ ॥
नेष्टोऽसाधारणस्तावद्विशेषो निर्विकल्पनात् ।
तथा च शावलेयादि[14]रसामान्य[15]प्रसङ्गतः ॥ ३ ॥"

[ मी० श्लो० अपोह० श्लो० १-३ ]

"तस्मात्[16]सर्वेषु[17] यद्रूपं प्रत्येकं परिनिष्ठितम्[18] ।
गोबुद्धिस्तन्निमित्ता स्याद्गोत्वादन्यच्च नास्ति तत्[19] ॥"

[ मी० श्लो० अपोह० श्लो० १० ]

द्वितीयपक्षे[20] तु न किञ्चिद्वस्तु वाच्यं शब्दानामिति अतोऽप्रवृत्तिनिवृत्तिप्रसङ्गः[21]। तुच्छरूपाभावस्य चानभ्युपगमान्न[22] प्रसज्यप्रतिषेधाभ्युपगमो युक्तः[23]; परमत[24]प्रवेशानुषङ्गात्[25] ।

अपि च ये विभिन्न[26]सामान्य[27]शब्दा[28] गवादयो ये च विशेषशब्दाः शावलेयादयस्ते भवदभिप्रायेण[29] पर्यायाः प्राप्नुवन्त्य[30]र्थ[31]भेदाभावाद्वृक्षपादपादिशब्दवत् । न खलु तुच्छरूपाभाव[32]स्य[33] भेदो युक्तः;

---

१ अन्यथा । २ सामान्यस्यापोहस्याभावोऽसामान्यं तस्य प्रसङ्गात् । ३ विशेष. । ४ शावलेयादिना । ५ यो यः शब्दः स स शावलेयाद्यर्थवाचक इति । ६ सास्नादिमत्त्वम् । ७ अगोव्यावृत्ति । ८ नार्थतः । ९ गोशब्दस्य । १० सौगतैः । ११ गोत्वं वस्त्वेवाऽगोपोहगिरा उक्तम् । कुतस्तथा हि । १२ कारणेन । १३ पर्युदासपक्षे । १४ नेष्ट इति शेषः । १५ अन्यथा । १६ असाधारणशावलेयद्वयं न घटते यस्मात् । १७ सकलगोव्यक्तिषु । १८ वर्त्तते । १९ सामान्यम् । २० प्रसज्यपक्षे । २१ प्रवृत्तिश्च निवृत्तिश्च प्रवृत्तिनिवृत्ती तयोरभावोऽप्रवृत्तिनिवृत्ती तयोः प्रसङ्गः । २२ सौगतैः । २३ अन्यथा युक्तश्चेत् । २४ नैयायिकादि । २५ सौगतस्य । २६ यतः । २७ अश्वशब्दगोशब्दादि । २८ सामान्यस्याभिधायकाः । २९ बौद्ध । ३० भवन्ति । ३१ सर्वेषां पदार्थानां तुच्छस्वरूपत्वं यतः । ३२ निःस्वभावस्य । ३३ अपोहस्य ।

वस्तुन्येव[1] संसृ[2](संसृ)ष्टत्वैकत्वनानात्वादि[3]विकल्पानां[4] प्रतीतेः । भेदाभ्युपगमे[5] वा अभावस्य[6] वस्तुरूपतापत्तिः[7]; तथाहि[8]–ये परस्परं भिद्यन्ते ते वस्तुरूपा यथा स्वलक्षणानि, परस्परं भिद्यन्ते चाऽपोहा[9] इति ।

न चापोह्य[10]लक्षणसम्बन्धिभेदादपोहानां[11] भेदः[12]; प्रमेयाभिधेयादिशब्दानामप्रवृत्तिप्रसङ्गात्, तदभिधेयापोहानामपोह्य[13]लक्षण[14]सम्बन्धिभेदाभावतो[15] भेदासम्भवात् । अत्र[16] हि यत्किञ्चि[17]द्व्यवच्छेद्य[18]त्वेन कल्प्यते तत्सर्वं व्यवच्छेद्याकारेण[19]ालम्ब्यमानं[20] प्रमेयादिस्वभावमेवावतिष्ठते[21] । न ह्यविषयीकृतं[22] व्यवच्छेत्तुं[23] शक्यमतिप्रसङ्गात्[24] । न च सम्बन्धिभेदो भेदकः[25], अन्यथा बहुषु शावलेयादिव्यक्तिष्वेकस्याऽगोपोहस्याऽभावप्रसङ्गः[26] । यस्य चान्तरङ्गाः[27] शावलेयादिव्यक्तिविशेषा न भेदकाः 'तस्याऽश्वादयो भेदकाः' इत्यतिसाहसम् ! सम्बन्धिभेदाच्च वस्तुन्यपि भेदो नोपलभ्यते किमुताऽवस्तुनि[28]; तथाहि–देवदत्तादिकमेकमेव वस्तु युगपत्क्रमेण वानेकैराभरणादिभि[29]रभिसम्बध्यमान[30]मनासादितभेदमेवोपलभ्यते ।

भवतु वा सम्बन्धिभेदाद्भेदः[31]; तथापि–वस्तुभूत[32]सामान्या[33]नभ्युपगमे भवतां स[34] एवापोहाश्रयः[35] सम्बन्धी न सिद्धिमासादयति यस्य[36] भेदात्तद्भेदः[37] स्यात् । तथाहि–गवादीनां[38] यदि वस्तुभूतं[39] सारूप्यं[40][41][42] प्रसिद्धं भवेत्तदाश्वाद्यपोहाश्रयत्वमविशेषेणैषां[43] प्रसिद्ध्येन्नान्यथा[44] । अतो[45]ऽपोहविषयत्वमेषामिच्छता[46]ऽवश्यं[47] सारूप्यमङ्गीकर्त्तव्यम् । तदेव च सामान्यं वस्तुभूतं भविष्यतीत्यपोहकल्पना वृथैव ।

---

१ न तुच्छरूपाभावे । २ अन्ये सम्बद्धत्व । ३ आदिना प्रमेयत्वादि । ४ भेदानाम् । ५ सौगतैः । ६ अपोहस्य । ७ तल्लक्षणत्वाद्वस्तुत्वस्य । ८ कथम् । ९ अश्वादिनिवृत्तयः । १० अपोह्या व्यावर्त्या अश्वादयः । ११ अभावानाम् । १२ अन्यथा । १३ अप्रमेयादि । १४ स्वरूप । १५ स्वरूपेण नास्ति यतः । १६ प्रमेयादिशब्देषु । १७ अप्रमेयादि । १८ व्यावर्त्यत्वेन । १९ व्यावर्त्याकारेण । २० विषयीक्रियमाणम् । २१ वर्त्तते । २२ व्यवच्छेद्यमप्रमेयादि । २३ परिच्छेत्तुम् । २४ गगनकुसुममपि परिच्छेत्तुं शक्यं स्यात् । २५ अपोहानाम् । २६ किन्तु प्रतिव्यक्ति भिन्न एव स्यात् । २७ अव्यभिचारि प्रतिनियतमन्तरङ्गम् । २८ अपोहे । २९ कटककुण्डलादिभिः । ३० सम्बन्धिभिः । ३१ अपोहस्य । ३२ परमार्थसत्य । ३३ गोत्वादि । ३४ विवक्षितः । ३५ सन् । ३६ सम्बन्धिनः । ३७ अपोहस्य । ३८ अर्थानाम् । ३९ सदृशरूपम् । ४० शावलेयादिषु । ४१ सामान्यम् । ४२ गोत्वादि । ४३ साधारणेन । ४४ सारूप्याभावे । ४५ सामान्यानभ्युपगमे विवक्षितोऽपोहाश्रयः सम्बन्धी न सिद्ध्यति यतः । ४६ सौगतेन । ४७ नियमेन ।

यदि वाऽसत्यपि सारूप्ये शावलेयादिष्व[१]गोपोह[२]कल्पना तदा गवाश्वयोरपि कस्मान्न कल्प्येताऽसौ विशेषा[३]भावात्? तदुक्तम्—

"अथा[४]ऽसत्यपि सारूप्ये[५] स्यादपोहस्य[६] कल्पना।
गवाश्वयोरयं कस्मा[७]दगोपोहो न कल्प्यते ॥ १ ॥
शाबलेया[८]च्च भिन्नत्वं बाहुलेयाश्वयोः समम्[९]। 　　५
सामान्यं[१०] नान्यदिष्टं[११] चेत्क्वागोपोहः प्रवर्त्तताम् ॥ २ ॥'
[ मी० श्लो० अपोह० श्लो० ७६-७७ ]

यथा च स्वलक्षणादिषु[१२][१३] समया[१४]सम्भवान्न शब्दार्थत्वं[१५] तथाऽपोहेपि। निश्चितार्थो[१६] हि समय[१७]कृत्समयं करोति। न चापोहः केन[१८]चिदिन्द्रियैर्व्यवसीयते[१९]; तस्यावस्तुत्वादिन्द्रियाणां च वस्तु[२०]विषय- 　१०
त्वात्। नाप्यनुमानेन; वस्तुभूतसामान्यमन्तरेणानुमानस्यैवाऽप्रवृत्तेः।

अस्तु वा समयः[२१], तथापि[२२]-कथमश्वादीनां गोशब्दानभिधेयत्वम्[२३]? 'सम्बन्धा[२४]नुभव[२५]क्षणेऽश्वादे[२६][२७]स्तद्विषयत्वेनादृष्टेः[२८]' इत्यनुत्तरम्; यतो यदि यद्गोशब्दसङ्केतकाले दृष्टं ततो[२९]ऽन्यत्र[३०] गोशब्द- 　१५
प्रवृत्तिर्नेष्यते[३१], तदैकस्मात्सङ्केतेन[३२] विषयी[३३]कृता[३४]च्छावलेयादिगोपिण्डात् अन्यद्वाहुलेयादि[३५] गोशब्देनापोह्यं[३६] न[३७] भवेत्।

इतरेतराश्रय[३८]श्च[३९]-अगोव्यवच्छेदेन हि गोः प्रतिपत्तिः, स चाऽगौर्गोनिषेधात्मा, ततश्च अगौः इत्यत्रोत्तर[४०]पदार्थो वक्तव्यो[४१] यो 'न गौः' इत्यत्र[४२] नञा प्रतिषेध्येत। न ह्यनिर्ज्ञातस्वरूपस्य[४३] निषेधो 　२०

१ अश्वाद्यभाव। २ एक। ३ सारूप्यासत्त्वाविशेषात्। ४ यदि। ५ शावलेयादौ। ६ एकगोः। ७ कारणात्। ८ गवाश्वयोर्भिन्नत्वादेकागोपोहाश्रयत्वं नेत्युक्ते आह। ९ समानम्। १० परमार्थभूतम्। ११ भिन्नम्। १२ विशेषेपु क्षणिकनिरंशादिपु। १३ शावलेयादिषु। १४ सङ्केत। १५ घटते इति शेषः। १६ अस्य शब्दस्यायमर्थ इति। १७ ना। १८ नरेण। १९ निश्चीयते। २० स्वलक्षण। २१ अपोहे। २२ अपोहे समयसद्भावेपि। २३ स्यात्। २४ अनुमानमप्यन्यापोहं नावबोधयति। २५ गोशब्देन साक्षादिमदर्थस्य अनुमानस्य कार्यस्वभावसम्पाद्यत्वात्। अन्यापोहस्य निरुपाख्यत्वेनानर्थक्रियाकारित्वेन च स्वभावकार्ययोरसम्भवात्। २६ काले। २७ ता। २८ दर्शनाभावात्। २९ दृष्टं वर्जयित्वा। ३० अश्वे। ३१ परेण। ३२ खण्डमुण्डादिनाम्ना। ३३ गोशब्दस्यायं वाच्य इति। ३४ सौगतेन। ३५ गोपिण्डम्। ३६ अश्वादि व्यावर्त्यम्। ३७ सङ्केतकाले सङ्केतेनाविषयीकृतत्वाद्बाहुलेयादेः। ३८ दूषणान्तरमाह। ३९ कथम्। ४० गोशब्दार्थः। ४१ परेण त्वया। ४२ समासारम्भे वाक्ये। ४३ पदार्थस्य।

विधातुं शक्यः[1]। अथाऽगोनिवृत्त्यात्मा[2] गौरेव[3], नन्वेवमगोनिवृत्तिस्वभावत्वाद्गो[4]रगोप्रतिपत्तिद्वा[5]रेणैव[6] प्रतीतिः[7], अगोश्च[8] गोप्रतिषेधात्मकत्वाद्गोप्रतिपत्तिद्वारेणे[9]ति[10] स्फुट[11]मितरेतराश्रयत्वम्।

अथाऽगोशब्देन यो गौर्निषिध्यते स विधि[12]रूप एवा[13]गोव्य-
५ वच्छेदलक्षणा[14]पोहसिद्ध्यर्थम् तेनेतरेतराश्रयत्वं न भविष्यति; यद्येवम्[15]–'सर्वस्य शब्दस्यापोहोऽर्थः' इत्येवमपोहकल्पना वृथा विधिरूपस्यापि शब्दार्थस्य भावात्, अन्यथेतरेतराश्रयो दुर्निवारः। तदुक्तम्—

"सिद्धश्चागौ[16]रपोह्येत[17] गोनिषेधात्मकश्च सः।
१० तत्र[18] गौरेव वक्तव्यो नञा यः प्रतिषिध्यते[19] ॥ १ ॥
स चेदगोनिवृत्त्यात्मा भवेदन्योन्यसंश्रयः।
सिद्धश्चे[20]द्गौरपोहार्थं वृथापोहप्रकल्पनम् ॥ २ ॥
गव्य[21]सिद्धे त्वगौर्नास्ति तदभावेप्य(पि)गौः कुतः।
ना[22]धाराधेयवृत्त्या[23]दिसम्बन्धश्चाप्यभाव[24]योः ॥ ३ ॥"

१५ [ मी० श्लो० अपोह० श्लो० ८३-८५ ]

दिङ्ना[25]गेन विशेषणविशेष्यभावसमर्थनार्थम् "नीलोत्पलादिशब्दा अ[26]र्थान्तरनिवृत्तिविशिष्टा[27]नर्थानाहुः" [ ] इत्युक्तम्; तदयुक्त[28]म्; यस्य[29] हि येन[30] कश्चिद्वास्तवः सम्बन्धः सिद्धस्तत्तेन विशिष्टमिति वक्तुं युक्तम्, न च नीलोत्पल[31]योरनीलानुत्पल-
२० व्यवच्छेदरूपत्वेनाभावरूपयोराधाराधेयत्वादिः सम्बन्धः सम्भवति; नीरूपत्वात्। आदिग्रहणेन संयोगसमवायैका[32]र्थसमवायादिस[33]म्बन्धग्रहणम्। न चासति वास्तवे सम्बन्धे त[34]द्विशिष्टस्य[35] प्रतिपत्तिर्युक्ताऽतिप्र[36]सङ्गात्।

---

१ पुरुषेण। २ अश्वाद्यभावात्मा। ३ उत्तरपदार्थः। ४ भो सौगत। ५ ता। ६ उत्तरपदार्थस्य। ७ अश्वादेः। ८ ता। ९ एव। १० प्रतीतिः। ११ पूर्वोक्तप्रकारेण। १२ सास्नादिमात्रभावरूप इति भावः। १३ नागोनिवृत्त्यात्मा। १४ स्वरूप। १५ तर्हि। १६ ज्ञातः। १७ गोशब्देन। १८ एवं सति। १९ उच्यते एव गौरित्युक्ते आह। २० विधिरूपेण। २१ अज्ञाते। २२ जैनेनोच्यते। २३ विशेष्यपदाभिधेयोऽभावो विशेष्य आधारश्च विशेषणपदाभिधेयोऽभावो विशेषणमाधेयश्चेत्यभिप्रायः परस्य (सौगतस्य) नीलो घट इत्यादिवत्। २४ न केवलं सङ्केतः। २५ कारिकोत्तरार्धं व्याचष्टे। २६ अनील अनुत्पललक्षण। २७ अभावसहितान्। २८ कथम्। २९ विशेष्यस्य। ३० विशेषणेन। ३१ अर्थरूपयोः। ३२ एकार्थसमवायः मातुलिङ्गलक्षणं रूपवद्रसादेः। ३३ आदिना तादात्म्यम्। ३४ नील। ३५ उत्पलस्य। ३६ विशेषणविशेष्यतया सह्यविन्ध्ययोरपि प्रतिपत्तिः स्यादिति।

[1]नोऽस्माकम[2]नीला[3]दिव्यावृत्त्या[4] विशिष्टोऽनुत्पला[5]दिव्यव[6]च्छेदोऽभिमतो यतोयं दोषः स्यात्[7] । किं तर्हि ? अनीलानुत्पलाभ्यां व्यावृत्तं वस्त्वेव तथा[8] व्यवस्थितम्[9] । तच्चार्थान्तर[10]व्यावृत्त्या[11] विशिष्टं शब्देनोच्यते[12]; इत्यप्यपेशलम्[13]; स्वलक्षणस्याऽवाच्यत्वात्[14] । न च स्वलक्षणस्य व्यावृत्त्या विशिष्टत्वं[15] सिद्ध्यति[16]; यतो न वस्त्वपोहोऽसाधारणं तु वस्तु, न च वस्त्वऽवस्तुनोः सम्बन्धो युक्तः, वस्तुद्वयाधारत्वात्तस्य ।

अस्तु वा सम्बन्धः, तथापि विशेषणत्वमपोहस्याऽयुक्तम्, न हि सत्तामात्रेण[17] किञ्चिद्विशेषणम्[18] । किं तर्हि ? ज्ञातं सद्यत्स्वाकारानुरक्तया बुद्ध्या विशेष्यं[19] रञ्जयति तद्विशेषणम्[20] । न चापोहेऽयं प्रकारः सम्भवति[21] । न ह्यश्वादिबुद्ध्यापोहोऽध्यवसीयते । किं तर्हि ? वस्त्वेव । अपोहज्ञानासम्भवश्चोक्तः[22] प्राक् । न चाज्ञातोऽप्यपोहो विशेषणं भवति । "नागृहीतविशेषणा विशेष्ये बुद्धिः" [ ] इत्यभिधानात् ।

अस्तु वाऽपोहज्ञापनम्, (ज्ञानम्;) तथापि-अर्थे[23] तदाकारबु[24]द्ध्यभावात्तस्याऽविशेषणत्वम् । सर्वं हि विशेषणं स्वाकारानुरूपां[25] विशेष्ये बुद्धिं जनयद्दृष्टम्, न त्वन्यादृशं[26] विशेषणमन्यादृशीं[27] बुद्धिं विशेष्ये जनयति[28] । न खलु नीलमुत्पले 'रक्तम्' इति प्रत्ययमुत्पादयति, दण्डो[29] वा 'कुण्डली' इति । न चाश्वादिष्व[30]भावानु[31]रक्ता शाब्दी[32] बुद्धिरुपजायते । किन्तर्हि ? भावाकाराध्यवसा[33]यिनी । तथापि[34] विशेषणत्वे[35] सर्वं सर्वस्य विशेषणं स्यात्[36] । अनु-

१ भवतामयं प्रसङ्ग इत्युक्ते सत्याह । २ जैनानाम् । ३ रक्तादि । ४ विशेषणेन । ५ अपद्मादि । ६ विशेष्यः । ७ न कुतोपि । ८ नीलोत्पलरूपेण । ९ इति जैनः । १० अर्थः स्वलक्षणरूपः । ११ अनीलाऽनुत्पलरूप । १२ इति सौगतः । १३ कुतः । १४ यद्वस्तु तत्स्वलक्षणमेवेति शब्देन । १५ सौगतमते । १६ अन्यव्यावृत्तिरूपं तु सामान्यमेव । १७ अपोहोस्तीत्यस्तित्वमात्रेण । १८ लोके । १९ उत्पलम् । २० स्यात् । २१ अज्ञातत्वादपोहस्य । २२ न तावत्प्रत्यक्षेणापोहग्रहणमित्यादिः । २३ स्वलक्षणरूपे । २४ स्थिरस्थूलाकारः स्वलक्षणोस्तीति ज्ञायते न त्वभावरूपापोहाकारः । २५ सतीं सदृशीम् । २६ अभावरूपम् । २७ भावरूपाम् । २८ कथम् । २९ पुरुषस्य । ३० स्वलक्षणरूपेषु । ३१ अपोहासक्ता । ३२ शब्दजनिता सविकल्पेत्यर्थः । बौद्धानां मते निर्विकल्पकज्ञानानन्तरोत्पन्नसविकल्पकज्ञानेन स्वलक्षणस्य निश्चयो यतः । ३३ स्थिरस्थूलाकार पदार्थाकार । ३४ स्वाकारानुरूपबुद्ध्यजनकत्वेपि । ३५ अपोहस्य । ३६ स्वाकारानुरूपबुद्ध्यजनकत्वाविशेषात् ।

रागे[1] वा अभावरूपेण[2] वस्तुनः[3] प्रतीतेर्वस्तुत्वमेव न स्यात्[4], भावाभावयोर्विरोधात्। शब्देनाऽगम्यमानत्वाच्चाऽसाधारणवस्तुनो[5] न व्यावृत्त्या[6] विशिष्टत्वं प्रत्येतुं शक्यम्[7]। उक्तञ्च—

"न चासाधारणं वस्तु गम्यतेऽपोहवत्तया[8]।
५ कथं वा परिकल्प्येत सम्बन्धो वस्त्ववस्तुनोः ॥ १ ॥
स्वरूपसत्त्वमात्रेण न स्यात्किञ्चिद्विशेषणम्[9]।
स्वबुद्ध्या[10] रज्यते येन विशेष्यं तद्विशेषणम् ॥ २ ॥
न चाप्यश्वादिशब्देभ्यो जायतेऽपोहभासनम्[11]।
विशेष्ये बुद्धिरिष्टेह[12] न चाज्ञातविशेषणा ॥ ३ ॥
१० न चान्यरूपमन्यादृक्[13] कुर्याज्ज्ञानं[14] विशेषणम्[15]।[16]
कथं वाऽन्यादृशे[17] ज्ञाने[18] तदुच्येत[19] विशेषणम् ॥ ४ ॥
अथान्यथा[20] विशेष्येऽपि[21] स्याद्विशेषणकल्पना[22]।
तथा सति हि यत्किञ्चित्प्रसज्येत[23] विशेषणम् ॥ ५ ॥
अभावगम्यरूपे च न विशेष्येऽस्ति[24] वस्तुता।
१५ विशेषितमपोहेन[25] वस्तु[26] वाच्यं[27] न तेऽस्त्यतः[28] ॥ ६ ॥"
[ मी० श्लो० अपोह० श्लो० ८६-९१ ]

"शब्देनागम्यमानं च विशेष्यमिति[29] साहसम्[30]।
तेन[31] सामान्यमेष्टव्यं विषयो बुद्धिशब्दयोः[32] ॥"
[ मी० श्लो० अपोह० श्लो० ९४ ]

२० इतश्च सामान्यं[33] वस्तुभूतं शब्दविषयः; यतो व्यक्तीनामसाधारणवस्तुरूपाणामशब्दवाच्यत्वान्न[34] व्यक्तीनामपोहेत, अनुक्तस्य[35]

१ अश्वादिषु शब्दजबुद्धेरभावेन सहानुरागे सति। २ यदा भावाकारो धृतस्तदाऽभावरूपमेव स्वलक्षणं निश्चिनुयादिति भावः। ३ स्वलक्षणस्य। ४ कुतः। ५ स्वलक्षणस्य। ६ अपोहेन। ७ अर्थान्तरव्यावृत्त्या विशिष्टं स्वलक्षणरूपं वस्तु शब्देनोच्यत इति वदन्तं वादिनं प्रति समर्थनमुक्तमिति ज्ञेयम्। ८ अपोहस्य। ९ कथं तर्हि विशेषणं स्यादित्युक्ते आह। १० स्वस्य=विशेषणस्य। ११ प्रतीतिः। १२ जगति। १३ अभावरूपम्। १४ भावरूपम्। १५ विशेष्ये। १६ जैनानामिदं दूषणं न जायते तेषां सर्वं वस्तु भावाभावात्मकं यतः। १७ भावरूपे। १८ अभावरूपे। १९ परेण। २० यदि। २१ भावरूपे। २२ अपोहस्य। २३ अनिर्वचनीयम्। २४ स्वलक्षणरूपे। २५ विशेषणेन। २६ स्वलक्षणरूपम्। २७ शब्देन। २८ सौगतस्य। २९ अपोहस्य विशेषणस्य। ३० स्वलक्षणम्। ३१ येन कारणेनापोहशब्दयोर्वाच्यवाचकभावो नास्ति तेन। ३२ शब्दजनितबुध्या गम्यः शब्देन वाच्यश्च। ३३ गोत्वादि। ३४ स्वलक्षणस्यावाच्यत्वं कुतः? सङ्केताभावात्। ३५ शब्देनावाच्यस्य।

निरा[1]कर्तुमशक्यत्वात्, अपोह्येत सामान्यं तस्य वाच्य[2]त्वात्। अपोहा[3]नां त्वभावरूपतयाऽपोह्य[4]त्वासम्भवात्[5], [6]अभावानामभावाभावात्, वस्तुविषयत्वात्प्रतिषेधस्य। अपोह्य[7]त्वे[8]ऽपोहा[9]नां वस्तुत्वमेव स्यात्। तस्मादश्वादौ गवादेरपोहो भव[10]न् सामान्यभूतस्यैव भवेदि[11]त्यपोह्यत्वाद्वस्तुत्वं सामान्यस्य। तदुक्तम्—

"यदा चाऽशब्दवाच्यत्वान्न व्यक्तीनां[12]मपोह्यता।
तदापोह्येत सामान्यं तस्यापोहाच्च वस्तु[13]ता ॥ १ ॥
नाऽपोह्यत्वमभावानामभावाऽभाववर्ज[14]नात्।
व्यक्तो[15]ऽपोहान्तरे[16]ऽपोह[17]स्तस्मा[18]त्सामान्य[19]वस्तुनः ॥ २ ॥"

[ मी० श्लो० अपोह० श्लो० ९५-९६ ]

किञ्च, अपोहा[20]नां परस्परतो वैलक्ष[21]ण्यं वा स्यात्, अवैलक्षण्यं वा? तत्राद्यपक्षे [अ]भावस्यागोश[22]ब्दाभिधेय[23]स्याभावो गोशब्दाभिधेयः, स[24] चेत्पूर्वोक्तादभा[25]वाद्विलक्षणः; तदा भाव एव भवेदभावनिवृत्तिरूपत्वाद्भावस्य।[26] न चेद्विलक्षणः; तदा गौर[27]प्यगौः प्रस[28]ज्येत त[29]द्वैल[30]क्ष्येण (तदवैलक्षण्येन) तादात्म्य[31]प्रतिप[32]त्तेः। तन्न वाच्या[33]भिमतापोहानां भेदसिद्धिः।

नापि वा[34]चकाभि[35]मतानाम्; तथाहि-शब्दानां भिन्नसामान्य[36]-वाचिनां वि[37]शेषवाचिनां च परस्परतोऽपोहभे[38]दो वासना[39]भेद[40]-नि[41]मित्तो वा स्यात्, वाच्या[42]पोहभेदनिमित्तो वा? प्रथमपक्षोऽयुक्तः; अव[43]स्तुनि वासनाया एवासम्भवात्। तदसम्भवश्च

---

१ अपोहितुम्। २ शब्देन। ३ अन्यव्यावृत्तीनाम् ( सर्वेषां पदार्थानामपोहरूपत्वात्सर्वे भावा अपोह्याः )। ४ व्यावर्त्यत्व। ५ अत्र खरविषाणवद्दृष्टान्तः। ६ अपोह्यानाम् व्यावर्त्यानाम्। ७ व्यावर्त्यत्वे। ८ अङ्गीक्रियमाणे परेण। ९ अभावाभावानाम्। १० वर्तमानः। ११ हेतोः। १२ स्वलक्षणानाम्। १३ वस्तुविषयो निषेधो यतः। १४ निषेधस्य निषेधासम्भवात्। १५ अपोह्या(ह्या)न्तरेऽश्वादौ। १६ गोः। १७ व्यक्तीनामपोह्यानां चापोह्यता नास्ति यस्मात्। १८ एव। १९ ता। २० गोशब्दाश्वशब्दवाच्यानामन्यव्यावृत्तीनाम्। २१ विसदृशता। २२ अश्व। २३ वाच्यस्य। २४ गोशब्दाभिधेयोऽभावो यतः। २५ अगोशब्दाभिधेयात्। २६ द्वितीयपक्षे दूषणमुद्भावयन्ति। २७ एकस्वरूपः। २८ भवेत्। २९ भिन्नपदार्थे। ३० तस्मादगोशब्दवाच्यादपोहादवैलक्षण्यं गोशब्दवाच्यस्यापोहस्य। ३१ एकत्वात्। ३२ गोशब्दाऽगोशब्दवाच्यापोहयोः। ३३ अर्थ। ३४ शब्द। ३५ अपोहानाम्। ३६ गोलक्षणाश्वलक्षण। ३७ खण्डमुण्डादि। ३८ शब्दापोहभेदः। ३९ पूर्वविकल्पज्ञानं शब्दविषयं वासना। ४० एव। ४१ बसः। ४२ अर्थ। ४३ वाचकापोहे।

तद्धेतो[1]र्निर्विषय[2]प्रत्ययस्यायोगात्। नापि वाच्यापोहभेदनिमित्तः; तद्भेदस्य प्रागेव कृतोत्तरत्वात्।

ननु प्रत्यक्षेणैव शब्दानां[3] कारण[4]भेदाद्विरुद्ध[5]धर्मा[6]ध्यासाच्च भेदः प्रसिद्ध एव; इत्यप्यसाम्प्रतम्; यतो वाचकं[7] शब्दमङ्गीकृत्यै[8]वमुच्यते। न च श्रोत्रज्ञानप्रतिभासिस्वलक्षणात्मा[9] शब्दो वाचकः; सङ्केतकालानुभूतस्य[10] व्यवहारकालेऽचिरनिरुद्धत्वात्[11] इति न स्वलक्षणस्य[12] वाचकत्वं भवद[13]भिप्रायेण[14]। तदुक्तम्—

"नार्थशब्दविशेषेण वाच्यवाचकतेष्यते[15]।
तस्य पूर्वम[16]दृष्टत्वा[17]त्सामान्यं[18] तूपदिश्यते[19] ॥ १ ॥" [ ]
"तत्र[20] शब्दान्तरापोहे[21] सामान्ये परिकल्पिते।
तथैवा[22]वस्तु[23]रूपत्वाच्छब्दभेदो न कल्प्यते[24] ॥ २ ॥"
[ मी० श्लो० अपोह० श्लो० १०४ ]

ततो ये अवस्तुनी न तयोर्गम्यगमकभावो यथा खपुष्प-खरविषाणयोः। अवस्तुनी च वाच्यवाचकापोहौ भवता[25]मिति। ननु[26] मेघाभावाद्वृष्ट्यभावप्रतिपत्तेरनैकान्तिकता[27] हेतोः[28]; इत्यप्ययुक्तम्; तद्विविक्ता[29]काशालोकात्मकं हि वस्तु मत्पक्षे[30]ऽत्रापि प्रयोगेस्त्येव, अभावस्य भावान्तरस्वभावत्वप्रतिपादनात्। भवत्पक्षे[31] तु न केवलमपोहयो[32]र्विवादास्पदीभूतयोर्गम्यगमकत्वाभावोऽपि तु वृष्टिमेघाद्यभावयो[33]रपि।

किञ्च[34], अपोहो वाच्यः[35], अथा[36]वाच्यो[37] वा? वाच्यश्चेत्किं विधिरूपेण, अन्यव्यावृत्त्या वा? यदि विधि[38]रूपेण[39]; कथमपोहः सर्व-

१ वासनाकारणस्य। २ तुच्छरूपत्वान्निर्विषयत्वमपोहस्य सविकल्पकज्ञानस्य। ३ गवादीनाम्। ४ ताल्वादि। ५ भिन्न। ६ अध्यासो ग्रहणम्। ७ पारमार्थिकार्थस्य। ८ परेण सौगतेन। ९ स्वलक्षणरूपशब्दस्य। १० विनष्टत्वात्। ११ हेतोः। १२ शब्दस्वभावस्य। १३ बौद्ध। १४ अस्वलक्षणरूपैः शब्दैरस्वलक्षणरूपार्थप्रतिपादने न किञ्चित्साध्यसिद्धिर्बौद्धमते इत्यभिप्रायः। १५ परेण। १६ सङ्केतकालात्। १७ अज्ञातत्वात्। १८ उत्तरकाले। १९ अर्थशब्दयोः। २० तर्हि सामान्याकारेण वाच्यवाचकतास्त्वित्याशङ्कायामाह। सामान्यस्य वाच्यवाचकतयोपदेशे च। २१ गोशब्दादश्वशब्दः शब्दान्तरं तेन वाच्योऽपोहस्तत्र। २२ अवास्तवे। परिकल्पितप्रकारेण। २३ शब्दानाम्। २४ समर्थ्यते। २५ सौगतानाम्। २६ अभावरूपयोरपि गम्यगमकभावोस्तीति वक्ति बौद्धः। २७ गम्यगमकभावसद्भावात्। २८ अवस्तुत्वादिति। २९ मेघादिभिन्न। ३० जैन। ३१ सौगत। ३२ वाच्यवाचकयोः। ३३ तुच्छरूपत्वात्। ३४ अन्यच्च। ३५ शब्देन। ३६ अथवा। ३७ शब्देन। ३८ अस्तित्वसद्भावेन। ३९ एव।

शब्दार्थः[1]? अथान्यव्यावृत्त्या[2]; तर्हि नापोहोऽपि[3] शब्दाधिगम्यो मुख्यः। अनवस्था[4] च[5]-तद्व्यावृत्तेरपि व्यावृत्त्यन्तरेणाभिधानात्। अथाऽवाच्यः[6]; तर्हि 'अन्य[7]शब्दा[8]र्था[9]ऽपोहं शब्दः[10] प्रतिपादयति' इत्य[11]स्य व्याघातः[12]।

किञ्च, '[13]नान्यापोहः अनन्यापोहः' इत्यादौ विधिरूपादन्य[14]-द्वाच्यं नोपलभ्यते प्रतिषेधद्वयेन[15] विधेरेवाध्यवसायात्। ५

कश्चायमन्यापोह[16]शब्दवाच्योर्थो यत्रान्यापोहसंज्ञा[17] स्यात्? अथ[18] विजा[19]तीयव्यावृत्तानर्था[20]नाश्रित्यानुभवादि[21]क्रमेण यदुत्पन्नं विकल्पज्ञानं तत्र यत्प्रतिभाति ज्ञानात्मभूतं[22] विजातीयव्यावृत्तार्थाकारतयाध्यवसितमर्थप्रतिबिम्बकं[23] तत्रान्यापोह इति संज्ञा[24]। ननु विजातीयव्यावृत्तपदार्था[25]नुभवद्वारेण शाब्दं[26] विज्ञानं तथाभूतार्थाध्यवसाय्युत्पद्यते इत्यत्राविवाद[27] एव। किन्तु तत्तथाभूतपारमार्थिकार्थग्राह्यभ्युपगन्त[28]व्यमध्यवसाय[29]स्य ग्रहणरूपत्वात्[30]। विजातीयव्या[31]वृत्तेश्च समान[32]परिणामरूपवस्तुधर्मत्वेन व्यवस्थापितत्वान्ना[33]ममात्रमेव भिद्येत। १० १५

यच्चोक्तम्-"[34]तत्प्रतिबिम्बकं च शब्देन जन्यमानत्वात्तस्य कार्यमेवेति कार्यकारणभाव एव वाच्यवाचकभावः" [   ]

१ अपोहस्य विधिरूपेण वाच्यत्वात्सर्वशब्दार्थोऽपोह एव न भवतीत्यर्थः। २ अपोह। ३ न केवलं स्वलक्षणम्। ४ अन्यव्यावृत्तिरपि वाच्याऽवाच्या वा स्यात्? अवाच्या तदाऽवाच्ययान्यव्यावृत्त्या कथमपोहो वाच्योतिप्रसङ्गात्। अथ वाच्या किं विधिरूपेणान्यव्यावृत्त्या वा? न तावद्विधिरूपेणोक्तदोषानुषङ्गात्। अथान्यव्यावृत्त्या अन्यव्यावृत्तिर्वाच्या चेत्तत्राप्यन्यव्यावृत्तिर्यथा वाच्या सापि वाच्याऽवाच्या वेत्यादिप्रकारेणानवस्था। ५ कुतः। ६ शब्देन। ७ अश्व। ८ यसः। ९ अश्वलक्षण। १० गौरिति। ११ मतस्य। १२ अपोहस्याऽवाच्यत्वात्। १३ सर्वेषां परस्परेण व्यावृत्तिस्वभावो यतः। १४ अविधिरूपम्। वस्तु। १५ आदौ यो नञ् स एकोपोहो द्वितीयेन तस्याप्यपोहः। द्वौ नञौ प्रकृतमर्थं गमयतः। १६ इति। १७ सङ्केतः। १८ कश्चिद्बौद्धविशेषः प्राह। १९ अश्वादिभ्यः। २० खण्डमुण्डादिस्वलक्षणान्। २१ प्रथमं खण्डमुण्डाद्यनुभवो नाम निर्विकल्पकं दर्शनं, तदनु विकल्पवानुद्बोधस्तदनु सङ्केतकालगृहीतवाच्यवाचकस्मरणं तदन्वितं वाच्यवाचकमिति योजनं, तदनु विकल्पोयं गौरिति। २२ अश्वादिभ्यः। २३ ज्ञानादभेदरूपम्। २४ जैनबौद्धयोः। २५ ज्ञाने ज्ञानस्वरूपार्थाकारोऽपोह इति बौद्धविशेषस्याऽभिप्रायः। २६ श्रावणप्रत्यक्षम्। २७ निश्चयस्य। ८ सौगतेन। ९ पदार्थानां ज्ञानस्य। ३० बौद्धमते। ३१ खण्डमुण्डादिस्वव्यक्त्यपेक्षया। ३२ विजातीयव्यावृत्तिः समानपरिणामरूपसामान्यं चेति। ३३ स्वग्रन्थे। ३४ अर्थ। ज्ञाने।

तदप्ययुक्तम्; शब्दाद्विशिष्टसङ्केतसव्यपेक्षाद्वाह्यार्थे[1] प्रतिपत्तिप्रवृत्तिप्राप्तिप्रतीतेः स एवास्यार्थो युक्तः, न तु विकल्पप्रतिबिम्बकमात्रं शब्दात्तस्य वाच्यतयाऽ[2]प्रतीतेः।

अतोऽयुक्तम्-"प्रतिबिम्बस्य मुख्यमन्यापोहत्वं विजातीयव्या-
५ वृत्तस्वलक्षणस्यान्य[3]व्यावृत्तेश्चौपचारिकम्" [ ]
इति।[4]अन्यापोहस्य हि वा[5]च्यत्वे मुख्योपचारकल्पना युक्तिमती, तच्चास्य नास्तीत्युक्तम्[6]। त[7]तः प्रतिनियताच्छब्दात्प्रतिनियतेऽर्थे प्राणिनां प्रवृत्तिदर्शनात्सिद्धं[8] शब्दप्रत्ययानां व[9]स्तुभूतार्थविषयत्वम्। प्रयोगः-ये परस्परासं[10]कीर्णप्रवृत्तयस्ते वस्तुभूतार्थविषयाः
१० यथा श्रोत्रा[11]दिप्रत्ययाः, परस्पराऽसङ्कीर्णप्रवृत्तयश्च दण्डीत्यादिशब्दप्रत्यया इति। न चायमसिद्धो हेतुः; 'दण्डी विषाणी' इत्यादि[12]धीध्व[13]नी हि लोके द्रव्योपा[14]धिकौ प्रसिद्धौ, 'शुक्लः कृष्णो भ्रमति चलति' इत्या[15]दिकौ तु गुणक्रियानिमित्तौ, 'गौरश्वः' इत्या[16]दी सा[17]मान्यविशेषोपा[18]धी, 'इहात्मनि ज्ञानम्' इत्या[19]दिकौ
१५ सम्बन्धोपा[20]धिकावेवेति प्रतीतेः।

न[21]नु चाकृतसमया ध्वनयोऽर्थाभिधा[22]यकाः, कृतसमया वा? प्रथमपक्षेऽति[23]प्रसङ्गः। द्वितीयपक्षे तु क्व तेषां सङ्केतः-स्वलक्षणे, जा[24]तौ वा, तद्योगे वा, जातिमत्यर्थे वा, बु[25]द्ध्या[26]कारे वा प्रकारान्तरासम्भवात्? न तावत्स्वलक्ष[27]णे; समयो हि व्यवहारार्थं क्रियमाणः
२० सङ्केतव्य[28]वहारकालव्याप[29]के वस्तुनि युक्तो नान्यत्र[30]। न च स्वलक्षणस्य सङ्केतव्यवहारकालव्यापकत्वम्; शाबलेया[31]दिव्यक्तिविशेषाणां दे[32]शादिभेदेन परस्परतोऽत्यन्तव्यावृत्ततयाऽन्व[33]या[34]भावात्,

१ घटपटादिलक्षणे। २ अर्थतया। ३ सम्बन्धिन्याः। ४ तथा हि। ५ शब्देन। ६ किञ्चापोह्यवाच्योर्थेत्यादिना। ७ शब्दार्थोऽपोह्यो विचार्यमाणो न घटते यतः। ८ परमार्थ। ९ बसः। १० असङ्कलित। ११ लोचनादिज्ञानानि। १२ द्वन्द्वः। १३ ध्वनिः शब्दः। १४ उपाधिः=विशेषणं कारणमित्यर्थः। १५ धीध्वनी। १६ धीध्वनी। १७ गोत्वादि। १८ अश्वादेर्व्यावर्त्तमानत्वात्तदेव विशेषः। १९ धीध्वनी। २० संबन्धः=समवायः। २१ अत्र प्रतिविधीयते। इत्येतावतः प्राक् सौगतः पूर्वपक्षयति। २२ घटादिवाचकाः। २३ घटशब्दः पटाभिधायको भवतु सङ्केताभावात्। २४ सदृशपरिणामलक्षणे संकेतोस्ति। २५ बुद्धावर्थाकारे। २६ प्रतिबिम्बके। २७ क्षणिकादिरूपे। २८ प्रवृत्तिनिवृत्तिरूप। २९ स्थायिनि। ३० अव्यापके क्षणिके। ३१ आदिना खण्डमुण्डशवलादीनाम्। ३२ आदिना कालस्वरूपस्वभावाः। ३३ खण्डो मुण्डादत्यन्तव्यावृत्त इति सम्बन्धाभावात्। ३४ यो यत्रैव स तत्रैव यो यदैव तदैव सः। न देशकालयोर्व्याप्तिर्भावानामिह विद्यते।

तत्रानन्त्येन सङ्केतासम्भवाच्च[2]। विकल्पबुद्धावध्याहृत्य[3][4] तेषु सङ्केताभ्युपगमे[5] विकल्पसमारोपितार्थविषय[6] एव शब्दसङ्केतः, न परमार्थवस्तुविषयः[7] स्यात्। स्थिरैकरूपत्वाद्धिमाचलादिभावानां[8] सङ्केतव्यवहारकालव्यापकत्वेन समयसम्भवोप्यसम्भाव्यः[9]; तेषामप्यनेकाणुप्रचयस्वभावानां प्रादुर्भावानन्तरमेवापवर्गितया[10] तदसम्भवात्।

किञ्च, एतेषु[11] समयः क्रियमाणोऽनुत्पन्नेषु क्रियेत, उत्पन्नेषु वा? न तावदनुत्पन्नेषु[12] परमार्थतः समयो युक्तः; असतः सर्वोपाख्यारहितस्याधारत्वानुपपत्तेः[13][14]। नाप्युत्पन्नेषु; तस्यार्थानुभवशब्दस्मरणपूर्वकत्वात्[15], शब्दस्मरणकाले चार्थस्य प्रध्वंसात्। सर्वेषां[16] स्वलक्षणक्षणानां सादृश्यमैक्येनाध्यारोप्य[17][18] सङ्केतविधाने[19] सिद्धं स्वलक्षणस्याऽवाच्यत्वम् बुद्ध्यारोपितसादृश्यस्यैवाभिधानैरभिधानात्। वाच्यत्वे[20][21] वा शब्दबुद्धेः[22] स्पष्टप्रतिभासप्रसङ्गः, न चैवम्। न खलु यथेन्द्रियबुद्धिः[23] स्पष्टप्रतिभासा प्रतिभासते तथा शब्दबुद्धिः। प्रयोगश्च[24]-यो यत्कृते[25] प्रत्यये न प्रतिभासते न स तस्यार्थः यथा रूपशब्दप्रभवप्रत्यये रसाप्रतिभासने नासौ[26] तदर्थः, न प्रतिभासते च शाब्दप्रत्यये स्वलक्षणमिति। उक्तञ्च—

"अन्यथैवाग्निसम्बन्धाद्दाहं[27][28][29] दग्धो[30] हि[31] मन्यते[32]।
अन्यथा[33] दाहशब्देन दाहार्थः सम्प्रतीयते ॥ १ ॥"

[ वाक्यप० २।४२५ ]

न चैकस्य वस्तुनो रूपद्वयमस्ति[34][35], येनास्पष्टं वस्तुगतमेव[36] रूपं शब्दैरभिधीयेत एकस्य[37] द्वित्वविरोधात्। तन्न स्वलक्षणे सङ्केतः[38]।

---

१ यो यो गोशब्दः स स मुण्डवाचक इति। २ व्यक्तिषु। ३ गोशब्दस्य। ४ सर्वव्यक्तयो गोशब्देन वाच्या इति आरोप्य। ५ जैनादिना। ६ बसः। ७ बसः। ८ पदार्थानाम्। ९ सङ्केत। १० विनाशितया। ११ शाबलेयादिविशेषेषु। १२ अजातेषु। १३ उपाख्या स्वभावः। १४ समयस्य। १५ अयमस्य शब्दस्य वाच्य इति। १६ त्रिकालत्रिलोकोदरवर्त्तिनाम्। १७ सदृशापरापरोत्पत्त्या यत्सादृश्यम्। १८ अभेदेन। १९ अङ्गीक्रियमाणे जैनादिना। २० शब्देन। २१ आरोपितसामान्यस्यैव वाच्यत्वं शब्देन यतः। २२ शब्दैः जातायाः। २३ स्वलक्षणस्य। २४ उपर्युक्तसमर्थनम्। २५ नेत्रादि। २६ स्वलक्षणरूपोर्थः। २७ स्पष्टत्वेन। २८ यसः। २९ स्पर्शनेन्द्रियेण। ३० साक्षात्। ३१ (नहि) दाहमित्युक्ते मुख्यं दह्यते। ३२ पुमान्। ३३ अस्पष्टत्वेन। ३४ स्पष्टत्वास्पष्टत्वे। ३५ युक्तिसिद्धम्। ३६ स्पष्टास्पष्टत्वलक्षणम्। ३७ रूपस्य। ३८ परमार्थभूतः।

नापि जातौ[1]; तस्याः[2] क्षणिकत्वे[3] स्वलक्षणस्यैवान्वयाभावान्न[4][5] सङ्केतः फलवान्। अक्षणिकत्वे[6] तु क्रमेण ज्ञानोत्पादकत्वाभावः। नित्यैकस्वभावस्य परापेक्षाप्यसम्भाव्या[7]। प्रतिषिद्धा चेयं[8] यथास्थानम् इत्यलमतिप्रसङ्गेन[9]।

५ नापि[10] तद्योगे[11] सङ्केतः; तस्यापि समवायादिलक्षणस्य[12] निराकृतत्वात्। जातितद्योगयोश्चासम्भवे तद्वतोप्यर्थस्यासम्भवात्कथं तत्रापि सङ्केतः[13]? बुद्ध्यर्थाकारे[14] वा; स हि बुद्धितादात्म्येन स्थितत्वान्न बुद्ध्यन्तरं प्रतिपाद्यमर्थं वानुगच्छति[15][16]।

किञ्च, '[17][18]इतः शब्दादर्थक्रियार्थी[19] पुरुषोऽर्थक्रियाक्षमानर्थान्वि-
१० ज्ञाय प्रवर्तिष्यते' इति मन्यमानैर्व्यवहर्तृभिरभिधायका[20] नियुज्यन्ते न व्यसनितया[21]। न चासौ विकल्पबुद्ध्याकारोऽर्थिनो[22][23]ऽभिप्रेतं शीतापनोदादिकार्यं सम्पादयितुं समर्थः।

किञ्च, बुद्ध्याकारे[24] शब्दसङ्केताभ्युपगमेऽपोहवादिपक्ष[25][26] एवाभ्युपगतो भवेत्[27]; तथाहि-अपोहवादिनापि[28] बुद्ध्याकारो बाह्यरूप[29]-
१५ तयाध्यवसितः शब्दार्थोऽभीष्ट एव, अर्थविवक्षां[30] च कार्यतया शब्दो[31] गमयति[32][33] यथा धूमोऽग्निमिति[34][35]।

अत्र[36] प्रतिविधीयते। कृतसमया एव ध्वनयोऽर्थाभिधायकाः[37][38]। समयश्च सामान्यविशेषात्मकेऽर्थेऽभिधीयते[39][40][41] न जात्यादिमात्रे[42]।

---

१ कुतः। २ जातेः। ३ गोत्वादिसामान्ये। ४ भवेत्। ५ अनुस्यूतत्वे। ६ तस्या जातेः। ७ परं=निमित्तम्। ८ जातिः। ९ जातौ सङ्केतनिराकरणप्रसङ्गेन। १० पक्षान्तरम्। ११ तयोः स्वलक्षणजात्योः सम्बन्धे। १२ आदिना संयोगतादात्म्यादेश्च। १३ शब्देन। १४ अर्थस्य। १५ नान्वेति। १६ अतः केन साकं सङ्केतः स्यात्। १७ विवक्षितत्वात्। १८ जैनमताभिप्रायं वक्ति सौगतः। १९ अर्थः=प्रयोजनम्। २० शब्दाः। २१ कार्यं विना प्रवृत्तिर्व्यसनम्। २२ अर्थस्य। २३ पुरुषस्य। २४ अर्थप्रतिबिम्बरूपे। २५ जैनेन। २६ सौगत। २७ जैनस्य। २८ सौगतेन। २९ ज्ञानात्मा बुद्ध्याकार एव बाह्यार्थो नापरः कश्चिदित्यभिप्रायो बौद्धविशेषस्य। ३० आन्तरार्थस्य वक्तुमिच्छां ज्ञानस्वभावां शब्दस्य कारणभूताम्। ३१ कार्यरूपः। ३२ ज्ञापयति। ३३ ज्ञानस्वभावा विवक्षा एव बाह्यार्थः शब्दविषयो नापरः कश्चिदित्यपि बौद्धविशेषाभिप्रायः। अन्यापोहरूपो बुद्ध्याकाररूपो विवक्षारूप एवं त्रिविधः शब्दविषयो बौद्धमते इति ज्ञेयम्। ३४ कार्यम्। ३५ कारणम्। ३६ परकृतपक्षे। ३७ शब्दाः। ३८ वाचकाः। ३९ तादात्म्यस्वरूपे। ४० परार्थे। ४१ क्रियते। ४२ केवलायां जातौ केवले विशेषे वा नाभिधीयते।

[1]तथाभूतश्चार्थो वास्तवः सङ्केतव्यवहारकालव्यापकत्वेन प्रमाणसिद्धः 'सामान्यविशेषात्मा तदर्थः' [ परीक्षामु० ४।१ ] इत्य[2]त्रातिविस्तरेण वर्णयि[3]ष्यते । सामान्यविशेषयोर्वस्तुभूतयोस्तत्सम्बन्धस्य चात्र [4]प्रमाणतः प्रसाधयिष्यमाणत्वात् । न चात्राप्यानन्त्याद्व्यक्तीनां [5]परस्परानुगमाच्च [6]सङ्केताऽसम्भवः; समान[7]परिणामापेक्षया क्षयोपशमविशेषाविर्भूतोहाख्यप्रमाणेन [8]तासां प्रतिभाससमानतया सङ्केतविषयतोपपत्तेः, कथ[9]मन्यथानुमानप्रवृत्तिः [10]तत्राप्यानन्त्याननुगमरूपतया साध्यसाधनव्यक्तीनां सम्बन्धग्रहणासम्भवात् ?

[11]अन्य[12]व्यावृत्त्या [13]सम्बन्धग्रहणम्; इत्यप्यसत्; तस्या एव [14]सदृशपरिणामसामान्यासम्भवे असम्भाव्य[15]मानत्वात् । न चाऽसदृशे[16]ष्वप्यर्थेषु [17]सामान्यविकल्प[18]जनकेषु [19]तद्दर्शन[20]द्वारे[21]ण सदृशव्यवहारे हेतुत्वम्; नीलादिविशेषाणामप्यभावानुषङ्गात् । [22]यथा हि परमार्थतोऽस[23]दृशा अपि तथाभूतविकल्पोत्पादकदर्शनहे[24]तवः सदृशव्यवहारभा[25]जो भावाः तथा [26]स्वयमनीलादि[27]स्वभावा अपि नीलादिवि[28]कल्पोत्पादकदर्शननिमित्ततया नीलादिव्यवहारभाक्त्वं प्रतिपत्स्यन्ते । [29]सदृशपरिणा[30]माभावे च [31]अर्थानां सजातीये[32]तरव्यवस्थाऽसम्भावा[33]त्कुतः कस्य व्यावृत्तिः ? अन्यव्यावृत्त्या सम्बन्धा[34]वगमे[35]पि [36]चैतत्[37]सर्वं [38]समानम् -[39]तत्रानन्त्याननुगमरूपत्वस्याऽविशेषात् । [40]ततो 'ये [41]यत्र [42]भावतः कृतसमया न भवन्ति न ते तस्याभिधायकाः यथा

१ सङ्केतितार्थो नास्तीत्युक्ते आह । २ सूत्रे । ३ जैनाचार्यैः । ४ प्रत्यक्षादितः । ५ व्यवहारकाले । ६ अस्य शब्दस्यायमर्थ इत्येवंरीत्या । ७ सदृश । ८ ये ये त्रिकालत्रिलोकोदरवर्तिनः सास्नादिमन्तस्ते ते गोशब्देन वाच्या इत्येवम् । ९ कुतः । १० अनुमानव्यवहारकाले । ११ परस्पर । १२ असाध्यासाधनरूपेण । १३ अविनाभावलक्षण । १४ या गोव्यक्तयस्ता गोशब्देन वाच्या इति । १५ पूर्वं निराकृतत्वात् । १६ खण्डादिषु । १७ सामान्यरूपश्चासौ विकल्पश्च । १८ अयमनेन सदृश इति विकल्पोऽयं गौरयं गौर्वेति विकल्पः । १९ विसदृशार्थे । २० प्रतीति । २१ मुखेन । २२ कथम्? तथा हि । २३ खण्डमुण्डादयः पदार्थाः । २४ सन्तः । २५ स्युः । २६ स्वरूपेण । २७ नीललक्षणभावाः । २८ विकल्पः=ज्ञानम् । २९ सामान्य । ३० सास्नादिमत्त्वादिना । ३१ गोघटपटादीनाम् । ३२ विजातीय । ३३ कस्मात् । ३४ साध्यसाधनव्यक्तीनाम् । ३५ किञ्च । ३६ सङ्केतपक्षे यत्परेणोच्यते । ३७ अन्यव्यावृत्तिविषयकम् । ३८ अन्यव्यावृत्तयोऽनन्ता इत्येवम् । ३९ व्यावृत्तिग्रहणकाले । ४० साध्यसाधनव्यक्तीनां सम्बन्धावगमो यथा वस्तुनि शब्दस्य सङ्केतपरिज्ञानमपि तथा स्यादतः । ४१ वस्तुनि । ४२ परमार्थतः ।

साक्षादिमत्यर्थेऽकृतसमयोऽ[1]श्वशब्दः, न भवन्ति च भावतः कृतसमयाः सर्वस्मिन्वस्तुनि सर्वे ध्वनयः' इत्यत्र [2]प्रयोगेऽसिद्धो[3] हेतुः; [4]उक्तप्रकारेणार्थे ध्वनीनां समयसम्भवात्।

यच्च हिमाचलादिभावानामप्यनेकपरमाणुप्रचयात्मनां क्षणिक-<br>
५ त्वेन समयासम्भव [5]इत्युक्तम्; तदप्युक्तिमात्रम्; सर्वथा क्षणिकत्वस्य [6]बाह्याध्यात्मि[7]कार्थे प्रतिषेत्स्यमानत्वात्। तथा चोत्पन्नेष्वप्यर्थेषु सङ्केतसम्भवात्, अयुक्तमुक्त[8]म्–'उत्पन्नेष्वनुत्पन्नेषु वा सङ्केतासम्भवः' इत्यादि।

ननु शब्देनार्थस्याभिधेय[9]त्वे [10]साक्षादेवातोर्थ[11]प्रतिपत्तेरि[12]न्द्रिय-<br>
१० संहतेर्वैफल्यप्रसङ्गः; [13]तन्न; अतोऽर्थस्याऽस्पष्टाकारतया प्रतिपत्तेः, स्पष्टाकारतया तत्प्रतिपत्त्यर्थमिन्द्रियसंहतिरप्युप[14]पद्यते एवेति कथं तस्या वैफल्यम्? स्पष्टाऽस्पष्टाकारतयार्थप्रतिभासभेद[15]श्च सामग्रीभेदान्न विरुध्यते, दूरासन्ना[16]र्थोपनिबद्धेन्द्रियप्रति[17]भास[18]वत्।

अथाऽसत्यप्यर्थेऽतीतानागतादौ शब्दस्य प्रवृत्ति(त्ते)र्नास्यार्था-<br>
१५ भिधायकत्व[19]म्; तदसत्; तस्ये[20]दानीमभावेपि स्वकाले भावात्, अन्यथा[21] प्रत्यक्षस्याप्यर्थविषयत्वाभावः स्यात् तद्विषयस्यापि तत्कालेऽभावा[22]त्। अविसंवादस्तु प्रमाणान्तरप्रवृत्तिलक्षणोऽध्य[23]क्षव[24]च्छाब्देप्यनुभूयत एव। '[25]आसी[26]द्वह्निः' इत्याद्यतीतविषये वाक्ये वि[27]शिष्टभस्मादिकार्यदर्शनोद्भूतानुमानेन संवादोपलब्धेः, चन्द्रार्क-<br>
२० ग्रहणाद्य[28]नागतार्थवि[29]षये तु प्रत्यक्षप्रमाणेनैव। [30]क्वचिद्विसंवादा-त्सर्वत्र[31] शाब्दस्याऽप्रामाण्[32]ये प्रत्यक्षस्यापि क्वचिद्विसंवादात्सर्वत्राप्रामाण्यप्रसङ्गः। [33]ततो निराकृतमेतत्—

"अन्यदेवेन्द्रियग्रा[34]ह्यम[35]न्यच्छब्दस्य गोचरः।

---

१ साक्षादिमदर्थाभिधायको न भवति यतः। २ परकृते। ३ भावतोऽकृतसमयत्वादिति। ४ समानपरिणामापेक्षयेत्यादिना। ५ परेण। ६ घटादौ। ७ ज्ञानादौ। ८ परेण। ९ प्रतिपाद्यत्वे। १० अव्यवधानेन। ११ श्रूयमाणाच्छब्दात्। १२ चक्षुरादिसमूहस्य। १३ सूक्तम्। १४ विवक्षिताच्छब्दात्। १५ घटते। १६ एकार्थे। १७ एकार्थस्य। १८ स्पष्टाऽस्पष्टतया। १९ एकार्थस्य। २० शब्दोच्चारणसमये। २१ अर्थस्यानभिधायकत्वे। २२ क्षणिकत्वात्। २३ प्रत्यक्षोत्पत्तिकाले इव। २४ ज्ञाने। २५ कथम्। २६ इह प्रदेशे। २७ किञ्चिदुष्णताकाष्ठाद्याकारधारित्वविशिष्ट। २८ भविष्यत्। २९ वाच्ये। ३० शब्दप्रतिपाद्ये। ३१ अर्थे। ३२ अङ्गीक्रियमाणे परेण। ३३ अभिन्नविषयत्वेपि शाब्दप्रत्यक्षयोः प्रतिभासभेदो दर्शितो यतः। ३४ स्वलक्षणम्। ३५ सामान्यम्।

शब्दात्[1] प्रत्येति[2][3] भिन्नाक्षो[4] न तु प्रत्यक्षमीक्षते[5][6][7] ॥ १ ॥" [ ]
"अन्यथैवाग्निसम्बन्धाद्[8] दाहं[9] दग्धोभिमन्यते[10] ।
अन्यथा[11] दाहशब्देन दाहार्थः सम्प्रतीयते ॥"
[ वाक्यप० २।४।२५ ] इत्यादि ।

सामग्रीभेदाद्विशदेतरप्रतिभासभेदो न पुनर्विषयभेदात्[12], सामान्यविशेषात्मकार्थ[13]विषयतया[14] सकलप्रमाणानां तद्भेदाभावा[15]दित्यग्रे[16] वक्ष्यमाणत्वात् । ततो[17] 'यो यत्कृते प्रत्यये न प्रतिभासते' इत्यादिप्रयोगे[18] हेतुरसिद्धः[19][20]; सामान्यविशेषात्मार्थलक्षण[21]स्वलक्षणस्य शाब्दप्रत्यये[22] प्रतिभासनात् ।

प्रयोगः-यद्यत्र व्यवहृति[23]मुपजनयति तत्तद्विषयम् यथा सामान्यविशेषात्मके वस्तुनि व्यवहृति[24]मुपजनयत्प्रत्यक्षं[25] तद्विषयम्, तत्र व्यवहृतिमुपजनयति च शब्द इति । न चासिद्धो हेतुः[26]; बहि[27]रन्तश्च[28] शाब्दव्यवहारस्य तथाभूते वस्तुन्युपलम्भात् । भवत्[29]कल्पितस्वलक्षणस्य तु प्रत्यक्षेऽन्यत्र[30] वा स्वप्नेप्यप्रतिभासनात्[31] ।

प्रतिज्ञापदयोश्च व्याघातः; तथाहि[32]-'अन्यदेवेन्द्रियग्राह्यम्[33]' इत्यनेन शब्देन कश्चिदर्थोभिधीयते वा, न वा? नाभिधीयते चेत्; कथमिन्द्रियग्राह्य[34]स्यान्यत्वम[35]तः प्रतीयते? अथाभिधीयतेर्थः; तर्हि तस्यैव तद्विषयत्वप्रसिद्धेः कथन्न शब्दस्यार्थागोचरत्व[36]प्रतिज्ञाऽतो व्याहन्येत? साक्षादि[37]न्द्रियग्राह्यागोचरो[38]ऽसाविति चेत्[39]; पारम्पर्येणासौ तद्गोचरो[40] भवति, न वा? यदि न भवति; तर्हि 'साक्षात्' इति विशेषणं व्यर्थम् । अथ भवति[41]; तर्हि तज्ज्ञा(तज्ज्ञा)

---

१ कुतः । २ अर्थम् । ३ जानाति । ४ उत्पाटिताक्षः अन्ध इत्यर्थः । ५ क्रियाविशेषणमेतद् । ६ परोक्षं जानातीत्यर्थः । ७ अर्थम् । ८ स्पर्शनेन्द्रियग्राह्यतया । ९ स्पष्टत्वेन । १० जानाति । ११ अस्पष्टत्वेन । १२ आसन्नदूरत्वादि । १३ सामान्यविशेषात्मकार्थो विषयो भवतीति साध्यः, शब्दो धर्मी । १४ बसः । १५ विषय । १६ चतुर्थाध्याये । १७ शब्दप्रत्ययेऽर्थप्रतिभासः सिद्धो यतः । १८ अनुमाने । १९ शब्दकृते प्रत्ययेऽप्रतिभासमानत्वात्स्वलक्षणस्येति । २० कुतः । २१ यसः । २२ शब्दज्ञानजनितज्ञाने । २३ विकल्पज्ञानम् । २४ विकल्पम् । २५ नायनादि । २६ तत्र व्यवहृतिजनकत्वात् । २७ गवादौ । २८ आत्मादौ । २९ सौगत । ३० अनुमानादौ । ३१ खरविषाणवत् । ३२ व्याघातमेव दर्शयति । ३३ बौद्धमते शब्दः कञ्चिदप्यर्थं न वक्ति तर्हि । ३४ अर्थस्य । ३५ भिन्नत्वम् । ३६ अर्थोऽगोचरो यस्य । ३७ अव्यवधानेन । ३८ बसः । ३९ स्वलक्षणं प्रत्यक्षं गृह्णाति । प्रत्यक्षाच्च विकल्पः ( नीलमिदं पीतमिदमिति ) । विकल्पाच्च शब्द, उत्पद्यते । विकल्पयोनयः शब्दः इत्यभिधानादिति । ४० स गोचरो यस्य शब्दस्य । ४१ पारम्पर्येणेन्द्रियग्राह्यार्थगोचरो भवति शब्दः ।

प्रतीतिः किमिन्द्रियजप्रतीतितुल्या, तद्विलक्षणा वा? यदि तत्तुल्या; तदा 'शब्दात्प्रत्येति[1] विनष्टाक्षो[2] न तु प्रत्यक्षमीक्षते[3]' इत्यनेन विरोधः[4]। तद्विलक्षणा चेत्; न तर्हि प्रतीतिवैलक्षण्यं विषयभेदसाधनम्, एकत्रापि[6] विषये तदभ्युपगमात्[5]।

५ दाहशब्देन चात्र कोर्थोभिप्रेतः-किमग्निः, उष्णस्पर्शः, रूपविशेषः, स्फोटः, तद्दुःखं वा? अस्तु यः कश्चित्, किमेभिर्विकल्पैर्भवतां सिद्धमिति चेत्? एतेषां[11] मध्ये योर्थोभिप्रेतो भवतां[12] तेनार्थेनार्थवत्त्वप्रसिद्धेः[13] तस्यानर्थविषयत्वाभावः सिद्ध इति।

नन्वेवं[14] दहनसम्बन्धाद्यथा[15] स्फोटो दुःखं वा तथा दाहशब्दादपि
१० किन्न स्यादर्थप्रतीतेरविशेषात्? तन्न; अन्यकार्यत्वात्तस्य, न खलु दहनप्रतीतिकार्यं स्फोटादि। किं तर्हि? दहनदेहसम्बन्धविशेषकार्यम्, सुषुप्ताद्यवस्थायामप्रतीतावपि अग्नेस्तत्सम्बन्धविशेषात् स्फोटादेर्दर्शनात्, दूरस्थस्य चक्षुषा प्रतीतावप्यदर्शनात्, मन्त्रादिबलेन त्वगिन्द्रियेणापि प्रतीतावप्यदर्शनात्[16][17]। तस्मादभिन्नेपि
१५ विषये[19] सामग्रीभेदाद्विशदेतरप्रतिभासभेदोऽभ्युपगन्तव्यः[20]।

तथा[21] चेदमप्ययुक्तम्-'न चैकस्य वस्तुनो रूपद्वयमस्त्येकस्य[22] द्वित्वविरोधात्' इति।

यदि चाभावोभिधीयते[23] शब्दैर्भावो नाभिधीयते इति क्रिया[24]प्रतिषेधान्न[25] किञ्चित्[26]कृतं[27] स्यात्। तथा च कथं नदीदेशद्वीपपर्वत-
२० स्वर्गापवर्गादिष्वाप्तप्रणीतवाक्यात्प्रतिपत्तिः श्रेयःसाधनानुष्ठाने प्रवृत्तिर्वा?[28] अन्यथा सर्वस्मादपि वाक्यात्सर्वत्रार्थे प्रतिपत्तिप्रवृत्त्यादिप्रसङ्गः[29]।

---

१ सामान्यार्थं जानाति। २ अन्धो ना। ३ क्रियाविशेषणम्। चक्षुःप्रत्यक्षेण यादृशमीक्षते न तादृशमिति भावः। ४ अर्थम्। ५ शब्दजेन्द्रियजप्रतीत्योः समानत्वात्। ६ दूरनिकटैकपादपादौ स्वलक्षणे। ७ परेण। ८ श्लोके। ९ सौगतस्य तव। १० जैनानाम्। ११ पदार्थानाम्। १२ सौगतानाम्। १३ शब्दस्य। १४ तेनार्थेनार्थवत्त्वसिद्धिप्रकारेण। १५ वह्निदहनसम्बन्धादर्थप्रतीतिर्विद्यते शब्दादप्यर्थप्रतीतिरिति। १६ दहनस्य। १७ स्फोटादिकस्य। १८ दूरपादपादौ। १९ दूरनिकटादि। २० परेण। अनेन कथनेन बौद्धस्य यथा स्वलक्षणस्य प्रत्यक्षेण स्पष्टतया प्रतिभासनं तथा शब्देनाप्यस्पष्टतया प्रतिभासनं जातमिति। २१ सामग्रीभेदात्प्रतिभासभेदे च। २२ वैशद्यावैशद्यरूपम्। २३ अपोहः। २४ भावस्य। २५ तर्हीति शेषः। २६ शब्दैः। २७ शब्दैर्न किंचित् वाच्यं स्यात्। २८ शब्देन कस्याप्यकरणेप्यर्थप्रतीतिरनुष्ठाने प्रवृत्तिश्च यदि। २९ अकृतत्वाविशेषात्।

सत्येतरव्यवस्थाभावश्च तत्त्वेतरप्रतिपत्तेरभावात् । तथाच[1] 'यत्सत्तत्सर्वमक्षणिकं क्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्' इत्यादेरिव 'यत्सत्तत्सर्वं क्षणिकं नित्ये क्रमयौगपद्याभ्यामर्थक्रियानुपपत्तेः' इत्यादेरप्यसत्त्वानुषङ्गः । विपर्यय[2]प्रसङ्गो वा, सर्वथार्थासंस्पर्शि[3]त्वाविशेषात् । कस्यचि[4]दनुमानवाक्यस्य कथ[5]ञ्चिदर्थसंस्पर्शित्वे[6] सर्वथार्थस्यानभिधेयत्वविरोधः । स्वपक्षविपक्षयोश्च सत्यासत्यत्वप्रदर्शनाय शास्त्रं प्रणयन्[7] वस्तु[8] सर्वथाऽनभिधेयं प्रतिजानाति इत्युपेक्षणीयप्रज्ञः, सर्वथाभि[9]धेयरहितेन तेन तस्य प्रणेतुमशक्तेः । 5

"शक्तस्य[10] सूचकं हेतुवचोऽशक्तम[11]पि स्वयम्[12]" [ प्रमाणवा० ४।२७ ] इत्यभिधानात्[13] । तत्कृतां[14] तत्त्वसिद्धिमुपजीवति[15], नार्थस्य तद्वाच्यतामिति किमपि महाद्भुतम् ! वस्तुदर्शन[16]वंश[17]प्रभवत्वाद्धेतुवचो वस्तुसूचकम्; इत्यक्षणिक[18]वादिनोपि समानम् । मद्वचनमेवार्थदर्शनवंशप्रभवं न पुनः परवचनम्; इत्यन्यत्रापि समानम् । 10 15

सकलवचसां विवक्षामात्रविषयत्वाभ्युपगमाच्च, तावन्मात्रसूचकत्वेन च शब्दस्य[10] प्रामाण्ये सर्वं[19] शाब्दविज्ञानं प्रमाणं स्यात्, प्रत्यागमस्यापि[20] प्रतिवाद्य[21]भिप्रायप्रतिपादकत्वाविशेषात् ।

किञ्च, अर्थव्यभिचारवच्छब्दानां विवक्षाव्यभिचारस्यापि दर्शनात्कथं ते तामपि प्रतिपादयेयुः ? गोत्र[22]स्खलनादौ ह्यन्य[23]विवक्षायामप्यन्य[24]शब्दप्रयोगो दृश्यते एव । 'सुविवेचितं कार्यं[25] कारणं[26] न व्यभिचरति' इति नियमोऽर्थविशेषप्रतिपादकत्वेप्यस्याऽस्तु । 20

न चास्य विवक्षायास्तदधिरूढार्थस्य वा प्रतिपादकत्वं युक्तम्; ततो बहिरर्थे[27] प्रतिपत्तिप्रवृत्तिप्राप्तिप्रतीतेः प्रत्यक्षवत् । यथैव हि

---

१ सत्येतरव्यवस्थाऽभावे च । २ पूर्वोक्तस्य सत्यत्वमुत्तरोक्तस्यासत्यत्वमित्यर्थः । ३ अविषयत्वं शब्दानां यतः । ४ सौगतोक्तस्य । ५ कथञ्चित्पारम्पर्येण । कथम् ? प्रथमतस्त्रिरूपधूमादिस्वलक्षणलिङ्गदर्शनं, तदनु सम्बन्धस्मरणं, तदनु शब्दप्रयोग इति । ६ सौगतेनाङ्गीक्रियमाणे । ७ दिग्नागादिः । ८ स्वलक्षणम् । ९ शब्देन । १० शास्त्रान्तरेपि स्वलक्षणसूचकं वचोस्तीति वदति शक्तस्य समर्थस्य हेतोर्धूमादिस्वलक्षणस्य वाच्यस्य । ११ साध्येऽशक्तमपि । १२ स्वरूपेण । १३ सौगतेन । १४ वचन । १५ अङ्गीकरोति । १६ त्रिरूपधूमादिस्वलक्षणलिङ्ग । १७ वंशः= अन्वयः । १८ जैनस्य । १९ ज्ञानस्य । २० परवचनस्य । २१ जैनादि । २२ गोत्रं= नाम । २३ देवदत्त । २४ जिनदत्त । २५ शब्दलक्षणम् । २६ विवक्षालक्षणम् । २७ घटपटादौ ।

प्रत्यक्षात्प्रतिपत्तृप्रणिधान[1]सामग्रीसापेक्षात्प्रत्यक्षार्थप्रतिपत्तिस्तथा सङ्केतसामग्रीसापेक्षादेव शब्दाच्छब्दार्थप्रतिपत्तिः सकलजनप्रसिद्धा, अन्यथाऽतो[2] बहिरर्थे प्रतिपत्त्यादिविरोधः। न चार्थेऽर्थि[3]नोऽर्थित्वादेव प्रवृत्तेः शब्दोऽप्रवर्त्तकः; अध्यक्षादेरप्येवम[4]प्रवर्त्तकत्वप्रसङ्गात् तदर्थेप्यभिलाषा[5]देव प्रवृत्तिप्रसिद्धेः। प[6]रम्परया प्रवर्त्तक[7]त्वं शब्दे[8]प्यस्तु विशेषाभावात्[9]।

का चेयं विवक्षा नाम–किं शब्दोच्चारणेच्छामात्रम्, 'अनेन शब्देनामुमर्थं प्रतिपादयामि' इत्यभिप्रायो वा? प्रथमपक्षे वक्तृश्रोत्रोः शास्त्रादौ प्रवृत्तिर्न स्यात्। न खलु कश्चिदनुन्मत्तः[10] शब्द[11]निमित्तेच्छामात्रप्रतिपत्त्यर्थं शास्त्रं वाक्यान्तरं वा प्रणेतुं श्रोतुं प्रवर्त्तते। दशदाडिमादिवाक्यैः सह सर्ववाक्यानामविशेषप्रसङ्गश्च, सर्वेषां स्वप्रभवेच्छा[12]मात्रानुमाप[13]कत्वाविशेषात्। अथ 'अनेन शब्देनामुमर्थं प्रतिपादयामि' इत्यभिप्रायो विव[14]क्षा, तत्सूचकत्वेन शब्दानामनुमानत्वम्; तदप्ययुक्तम्; व्यभिचारात्। न हि शुकशारिकोन्मत्तादयस्तथाभिप्रायेण वाक्यमुच्चारयन्ति।

किञ्च, स[15]मयानपेक्षं वाक्यं तादृशमभिप्रायं गमयेत्, तत्सापेक्षं वा? आद्यविकल्पे सर्वे[16]षामर्थप्रतिप[17]त्तिप्रसङ्गान्न क[18]श्चिद्भाषा[19]नभिज्ञः स्यात्। स[20]मयापेक्षस्तु शब्दोऽर्थमेव किं न गमयति? न ह्ययमर्थाद्बिभेति येन तत्र साक्षान्न वर्त्तेत। य[21]श्चाशक्यसमयत्वादिकेर्थे शब्दाप्रवृत्तौ न्यायः, सोऽभि[22]प्रायेपि समान इत्यभि[23]प्रायावगमोपि शब्दान्न स्या[24]त्। तन्न स्वलक्षणस्या[25]भिधानेना[26]निर्देश्यत्वम्।

किञ्च, तच्छब्देना[27]ऽप्रतिपाद्याऽनिर्देश्यत्वमस्योच्येत, प्रतिपाद्य वा? न तावदप्रतिपाद्य; अतिप्रस[28]ङ्गात्। प्रतिपाद्य चेत्; न;

---

१ प्रणिधानमेव सामग्री। २ शब्दात्। ३ पुरुषस्य। ४ पुरुषस्य। ५ अर्थित्वादेव। ६ प्रत्यक्षमभिलाषमुत्पादयति, अभिलाषाच्चार्थे प्रवृत्तिरिति। ७ प्रत्यक्षस्य। ८ शब्दोप्यभिलाषमुत्पादयति, अभिलाषात्प्रवृत्तिरिति। ९ परम्परया प्रवर्तकत्वस्य। १० धीमान्। ११ शब्दस्य निमित्तं कारणं या सा, सा चासाविच्छा च सैवेच्छा एवंभूता यतः शब्दोच्चारः पुरुषस्य। १२ स्वेषां वाक्यानां प्रभव उत्पत्तिर्यस्या इच्छायाः सा चासाविच्छा चेति। १३ विवक्षा धर्मिणी अस्यास्तीति साध्यं शब्दोच्चारणान्यथानुपपत्तेरिति। १४ अस्यैवंविधोभिप्रायोस्ति तदभिधायकशब्दोच्चारणादिति। १५ समयः=संकेतः। १६ सर्वतया। १७ अविशेषतः। १८ क्वचिद्देशादौ। १९ सकलभाषात्मकशब्दश्रवणात्। २० द्वितीयविकल्पः। २१ अर्थानामानन्त्यात्। २२ अभिप्रायाणामानन्त्यात्। २३ शब्दश्रोतॄणाम्। २४ अशक्यसमयत्वाविशेषात्। २५ सामान्यविशेषात्मकस्यार्थस्य। २६ शब्देन। २७ स्वलक्षणेति शब्देन। २८ घटादेरप्यनिर्देश्यत्वप्रसङ्गात्।

स्ववचनविरोधात् । शब्देन हि स्वलक्षणं प्रतिपादयता निर्देश्यत्वमस्याभ्युपगतं स्यात्, पुनश्च तदेव प्रतिषिद्धमिति। कथं चानिर्देश्य[१]शब्देनाप्यस्यानभिधाने[२] अनिर्देश्यत्व[३]सिद्धिः? भ्रान्तिमात्रात् ततस्तत्सिद्धौ न परमार्थतस्तदनिर्देश्यमसाधारणं वा सिद्ध्येत्। प्रत्यक्षात्[४]तथाभूतस्यास्य प्रसिद्धिः; इत्यपि मनोरथमात्रम्; निर्देश[५]योग्यस्य साधारणासाधारणरूपस्य वस्तुनस्तेन साक्षात्करणात्। 'वस्तुव्यतिरेकेण नापरा निर्देश्यता साधारणता वा प्रतिभाति' इत्य[६]साधारणतायामपि समानम्। 'वस्तुस्वरूपमेव सा' इत्यन्यत्रा[७]पि समानम्[८]।

किञ्च, विकल्प[९]प्रतिभास्यऽन्यापोहगता वाच्यता[१०] वस्तुनि[११] प्रतिषिध्यते[१२], वस्तुगता वा? आद्यविकल्पे सिद्धसाध्यता[१३]। न ह्यन्यापोहवाच्यतैव वस्तुवाच्यता; तत्प्रतिषेध[१४]विरोधात् । द्वितीयपक्षे तु स्ववचनविरोध इत्युक्तम्[१५]। ततः प्रामाणिकत्वमात्मनोऽभ्युपगच्छता प्रतीतिसिद्धा वाच्यता[१६]र्थस्याभ्युपगन्तव्या ।

सत्यम्[१७]; वाच्य[१८] एवार्थः । तद्वाचकस्तु पदादिस्फोट[१९] एव, न पुनर्वर्णाः। ते[२०] हि किं समस्ताः[२१], व्यस्ता वा तद्वाचकाः? यदि व्यस्ताः; तदैकेनैव वर्णेन गवाद्यर्थप्रतिपत्तिरुत्पादितेति[२२] द्वितीयादि[२३]वर्णोच्चारणमनर्थकम्। अथ समुदिताः; तन्न; क्रमोत्पन्नानामन्तर[२४]विनष्टत्वेन समुदायस्यैवासम्भवात् । न च युगपदुत्पन्नानां तेषां समुदायकल्पना; एकपुरुषापेक्षया युगपदुत्पत्त्यसम्भवात्, प्रतिनियत[२५]स्थानकरण[२६]प्रयत्नप्रभवत्वात्तेषाम्। न च भिन्नपुरुषप्रयुक्तगकारौकारविसर्जनीयानां समुदायेऽप्यर्थप्रतिपादकं प्रतिपन्नम्; प्रतिनियतवर्णक्रमप्रतिपत्त्युत्तरकालभावित्वेन शाब्दप्रतिपत्तेः प्रतिभासनात्।

---

१ इति। २ इदं स्वलक्षणमनिर्देश्यमिति अकथने। ३ स्वलक्षणस्य। ४ निर्विकल्पकात्। ५ शब्देन। ६ स्वलक्षणव्यतिरेकेण साधारणतापि पृथक् नो भातीति। ७ निर्देश्यतायां साधारणतायां च। ८ वस्तुस्वरूपत्वम्। ९ बुद्धि। १० शब्देन। ११ स्वलक्षणे। १२ स्वलक्षणमनिर्देश्यमित्यनेनोल्लेखेन। १३ बुद्धिप्रतिबिम्बरूपस्यान्यापोहगतस्य (वाच्यत्वस्य) स्वलक्षणेऽस्माभिरपि प्रतिषेधाभ्युपगमात्। १४ वस्तुनि अन्यापोहवाच्यता विद्यते चेन्न तर्हि प्रतिषेधः। कथमिति विरोधः। १५ शब्देन हीत्यादि। १६ शब्देन। १७ लब्धावसरो मीमांसकोऽवतिष्ठते। १८ शब्दैः। १९ वर्णादिनाभिव्यज्यमानो नित्यो व्यापकः पदादीनामर्थः पदादिस्फोटः। २० तदेव भावयति। २१ गौरित्यत्र गकारौकारविसर्जनीयाः गकारादिना। २२ हेतोः। २३ औकारादि। २४ उत्पत्तेः। २५ ताल्वादि। २६ क्रिया।

न चान्त्यो वर्णः[1] पूर्ववर्णानुगृहीतो[2] वर्णानां क्रमोत्पादे सत्यर्थ-प्रतिपादकः; पूर्ववर्णानामन्त्यवर्णं प्रत्यनुग्राहकत्वायोगात्[3]। तद्धि अन्त्यवर्णं प्रति जनकत्वं तेषां स्यात्, अर्थज्ञानोत्पत्तौ सह-कारित्वं वा? न तावज्जनकत्वम्; वर्णाद्वर्णोत्पत्तेरभावात्, प्रति-
५ नियतस्थानकरणादिप्रभवत्वात्तस्य, वर्णाभावेप्याद्यवर्णोत्पत्त्युपल[4]-म्भाच्च। नाप्यर्थज्ञानोत्पत्तौ सहकारित्वं तेषामन्त्यवर्णानुग्राह-कत्वम्; अविद्यमानानां[5] सहकारित्वस्यैवासम्भवात्। यथा चान्त्यवर्णं प्रति पूर्ववर्णाः सहकारित्वं न प्रतिपद्यन्ते तथा तज्ज-नितसंवेदनान्यपि, तत्प्रभवसंस्काराश्च।

१० किञ्च, संवेदनप्रभवसंस्काराः स्वोत्पादकविज्ञानविषयस्मृति-हेतवो नार्थान्तरे[12] ज्ञानमुत्पादयितुं समर्थाः। न खलु घटज्ञान-प्रभवः संस्कारः पटे स्मृतिं विदधद्दृष्टः। न च तत्संस्कारप्रभव[13]-स्मृतीनां तत्सहायता; तासां युगपदुत्पत्त्यभावात्। अयुगपदुत्प-न्नानां चावस्थित्यसम्भवात्[14]। न[15] चाखिलसंस्कारप्रभवैका स्मृतिः[16]
१५ सम्भवति; अन्योन्यविरुद्धानेकार्थानुभवप्रभवसंस्काराणामप्येक[17]-स्मृतिजनकत्वप्रसङ्गात्। न चान्यवर्णाऽनपेक्ष एव 'गौः' इत्यत्रा-न्त्यो वर्णोर्थे(र्थ) प्रतिपादकः; पूर्ववर्णोच्चारणवैयर्थ्यानुषङ्गात्। घट-शब्दान्त्यव्यवस्थितस्यापि[19] ककुदादिमदर्थ[20]प्रतिपादकत्वप्रसङ्गाच्च। तन्न वर्णाः समस्ता व्यस्ता वार्थप्रतिपादकाः सम्भवन्ति। अस्ति[21]
२० च गवादिशब्देभ्योऽर्थप्रतीतिः, तदन्यथानुपपत्त्या[22] वर्णव्यति-रिक्तोऽर्थप्रतीतिहेतुः स्फोटोऽभ्युपगन्तव्यः।

श्रोत्रविज्ञाने चासौ निरवयवोऽक्रमः[23] प्रतिभासते, श्रवण-व्यापारानन्तरमभिन्नार्थावभासिन्याः[24][25][26] संविदोऽनुभवात्। न चासौ वर्णविषया; वर्णानां परस्परव्यावृत्तरूपतयैकप्रतिभासजनकत्व-
२५ विरोधात्। न चेयं सामान्यविषया; वर्णत्वव्यतिरेकेणापरसामा[27][28]-

१ विसर्जनीयलक्षणः। २ गकारौकाराभ्याम्। ३ उत्पद्य विनष्टत्वात्पूर्ववर्णानाम्। ४ आद्यो गकारः। ५ असतां पूर्ववर्णानाम्। ६ उत्पत्त्यनन्तरं विनष्टत्वात्। ७ (पूर्ववर्णानां) धारणारूपाः। ८ अन्त्यवर्णश्रवणकाले प्राक्तनवर्णसंवेदनसंस्कारा-भावात्। ९ पूर्ववर्णानाम्। १० पूर्णवर्णज्ञान। ११ पूर्ववर्णलक्षण। १२ बहिरर्थे गवादौ। १३ पूर्ववर्णस्मृतीनाम्। १४ प्राक्तनप्राक्तनानां विनष्टत्वात्। १५ सर्वे-षामेका स्मृतिर्भविष्यतीत्युक्ते आह। १६ अन्त्यवर्णसहाया। १७ घटपटलकुट-शकटादि। १८ अन्त्यवर्णापेक्षया अन्यवर्णौ=गकारौकारौ। १९ विसर्जनीयस्य। २० गोरूप। २१ मा भवन्त्वित्युक्ते आह। २२ स्फोटं विना। २३ निरंशः। २४ अभिन्नः—एकः। २५ अर्थः स्फोटः तेन। २६ एकार्थेनावभासिन्याः। २७ अभिन्नरूप। २८ एकशब्दसूचक।

न्त्यस्य[1] गकारौकारविसर्जनीयेष्वसम्भवात्, वर्णत्वस्य च प्रति[2]-नियतार्थ[3]प्रत्यायकत्वायोगात्[4]। न चेयं भ्रान्ता; अबाध्यमानत्वात्। न चाबाध्यमान[5]प्रत्ययगोचरस्यापि स्फोटस्यासत्त्वम्; अवयविद्र[6]-व्यादेरप्यसत्त्वप्रसङ्गात्। नित्यश्चासौ[7] स्फोटोऽभ्युपगन्तव्यः। अनित्यत्वे सङ्केतकालानुभूत[8]स्य तदैव ध्वस्तत्वात्कालान्तरे देशान्तरे च गोशब्दश्रवणात्ककुदादिमदर्थप्रतीतिर्न स्यात्, असङ्केतिताच्छब्दादर्थप्रतिपत्तेरसम्भवात्। सम्भवे वा द्वीपा[9]न्तरादागतस्य गोशब्दाद्गवार्थप्रतिपत्तिः स्यात्, सङ्केतकरणवैयर्थ्यं[10] चासज्येत।

अत्र प्रतिविधीयते। प्रतीयमानात्[11]पूर्ववर्ण[12]ध्वंसविशिष्टादन्त्यवर्णादर्थप्रतीतेरभ्युपगमा[13]दुक्तदोषाभावः[14]। न चाभावस्य सहकारित्वं विरुद्धम्; वृन्तफलसंयोगाभावस्य अप्रतिबद्ध[15]गुरुत्व[16]फलप्रपातक्रियाजनने तद्[17]दर्शनात्, दृष्टं चोत्तरसंयोगं कुर्वत्प्राक्तनसंयोगाभावविशिष्टं[18] कर्म[19], परमाण्वग्निसंयोगश्च परमाणौ तद्गतपूर्वरूप[20]प्रध्वंसविशिष्टो रक्ततामुत्पादयन्प्रतीतः[21]।

यद्वा, पूर्ववर्णविज्ञानाभावविशिष्टः तज्ज्ञानजनितसंस्कारसव्यपेक्षो वाऽन्त्यो[22] वर्णोऽर्थप्रतीत्युत्पादकः। ननु संस्कार[23]स्य कथं विषया[24]न्तरे विज्ञानजनकत्वम्; इत्यप्यचोद्यम्; तद्भावभावितयार्थप्रतीतेरुपलब्धेः।

पूर्ववर्णविज्ञानप्रभवसंस्कारश्च प्रणालिकया[25]ऽन्त्यवर्णसहायतां प्रतिपद्यते; तथाहि-प्रथम[26]वर्णे तावद्विज्ञानम्[27], तेन च संस्कारो जन्यते। ततो द्वितीयवर्णविज्ञानम्, तेन च पूर्वज्ञानाहितसंस्कारसहितेन विशिष्टः संस्कारो जन्यते। एवं तृतीयादावपि योजनीयं यावदन्त्यः संस्कारो[28]ऽर्थप्रतिपत्तिजनकान्त्यवर्णसहायः[29]।

अथवा, शब्दार्थोपलब्धिनिमित्तक्षयोपशमप्रतिनियमादविनष्टा[30] एव पूर्ववर्णसंविदस्तत्संस्कारा[31]श्चाऽन्त्यवर्णसंस्कारं विदधति।

---

१ गवादेः। २ स्फोट एव प्रतिनियतार्थप्रत्यायको यतः। ३ अर्थः=गौलक्षणः, तस्य, ककुदादिमतोर्थस्य च। ४ (घटवाचकघटशब्दे)घकारादावपि वर्णत्वस्य सत्त्वात्। ५ श्रोत्रप्रत्यक्षज्ञानेन। ६ प्रत्यक्षज्ञानगोचरस्य घटादेः। ७ स्फोटस्य। ८ स्फोटात्। ९ गोरहितात्। १० तथा च। ११ श्रूयमाणात्। १२ वाक्यपक्षे वर्णस्थाने पदं ग्राह्यम्। १३ जैनैः। १४ पूर्ववर्णोच्चारणादिवैयर्थ्यलक्षण उक्तदोषः। १५ शाखादिना। १६ बसः। १७ तस्य कारणत्वस्य। १८ श्येनादेः। १९ गमनक्रिया। २० कृष्णादिरूप। २१ घटादौ। २२ पक्षेऽन्त्यपदम्। २३ पूर्ववर्णानाम्। २४ गोपिण्डे। २५ प्रवाहेण। २६ पक्षे प्रथमपदे। २७ समुत्पद्यते। २८ उभयविषयः, धारणाऽपरनामकः। २९ भवति। ३० द्रव्यत्वस्वरूपापेक्षया। ३१ ये अविनष्टाः।

तथाभूतसंस्कारप्रभवस्मृतिसव्यपेक्षो वान्त्यो वर्णः पदार्थप्रतिपत्तिहेतुः । वाक्यार्थप्रतिपत्तावप्ययमेव न्यायोऽङ्गीकर्त्तव्यः[3] । वर्णाद्वर्णोत्पत्त्यभावप्रतिपादनं च सिद्धसा[4]धनमेव । तदेवं[5] यथोक्तसहकारिकारण[6]सव्यपेक्षादन्त्यवर्णादर्थप्रतिपत्तेरन्वयव्यतिरेकाभ्यां निश्चयात् स्फोटपरिकल्पनाऽसम्भव एव; तदभावेप्यर्थप्रतिपत्तेरुक्तप्रकारेण सम्भवेऽन्यथानुपपत्तेः[7] प्रक्षयात् । न खलु दृष्टादेव कारणात्कार्योत्पत्तावदृष्टकारणान्तरपरिकल्पना युक्तिः स(क्तिस)ङ्गता अतिप्रसङ्गात्[8] ।

न चैवंवादिनो[9] वर्णेभ्यः स्फोटाभिव्यक्तिर्घटते; तथाहि–न समस्तास्ते स्फोटमभिव्यञ्जयन्ति; उक्तप्रकारेण तेषां सामस्त्यासम्भवात् । नापि प्रत्येकम्; वर्णान्तरोच्चारणानर्थक्यप्रसङ्गात्, एकेनैव वर्णेन सर्वात्मनाऽस्याभिव्यक्तत्वात् । पदार्थान्तर[10][11]प्रतिपत्तिव्यवच्छेदार्थं तदुच्चारणमिति चेत्; न; तदुच्चारणेपि तत्प्रतिपत्तेरेवानुषङ्गात् । यथाहि[12] 'गौः' इति पदस्यार्थो गकारो[13]च्चारणात्प्रतीयते तथौकारोच्चारणात् 'औशनसः[14]' इति पदार्थोपि, तथा च 'गौः' इति पदादेव 'गौः, औशनसः' इत्यर्थद्वयं प्रतीयेत । संशयो वा स्यात्–'किमेकपदस्फोटाभिव्यक्तये गाद्यनेकवर्णोच्चारणं पदान्तरस्फोटव्यवच्छेदेन[15], किं वानेकपदस्फोटाभिव्यक्तयेऽनेकाद्यवर्णोच्चारणम्' इति ।

न च पूर्ववर्णैः स्फोटस्य संस्कारेऽन्त्यो वर्णस्तस्याभिव्यञ्जकः इति[16] न वर्णान्तरो[17]च्चारणवैयर्थ्यम्; अभिव्यक्तिव्यतिरिक्तसंस्कारस्वरूपानवधारणात् । न[18] खलु तत्र तैर्वेगाख्यः[19] संस्कारो निर्वर्त्यते; तस्य मूर्त्तेष्वेव[20] भावात् । नापि वासनारूपः; अचेतनत्वात्[21] । स्फोटस्य तच्चैतन्याभ्युपगमे वा स्वशास्त्र[22]विरोधः । नापि स्थित-

---

१ ततः संस्कारस्य सव्यपेक्षोऽन्त्यवर्णोऽर्थप्रतीतिजनक इति । २ परेण । ३ जैनानाम् । ४ उक्तप्रकारेण । ५ ताल्वादि । ६ अन्त्यवर्णसद्भावेऽर्थप्रतिपत्तिस्तदभावेऽर्थप्रतिपत्त्यभाव इत्येवम् । ७ स्फोटसद्भावेऽर्थप्रतिपत्तिः स्फोटाभावे च तदभाव इति स्फोटानुमापिकायाः । ८ दृष्टाग्निकारणाद्धूमो जलकार्यं स्यात् । ९ समस्तेभ्यो व्यस्तेभ्यो वा वर्णेभ्योऽर्थप्रतीतिर्नास्तीत्येवं वादिनः । १० गौरित्यत्र गाभिव्यक्तस्फोटप्रतिपन्नार्थात् द्वोलक्षणादन्यपदाभिव्यक्तस्फोटप्रतिपन्नार्थोऽर्थान्तरम्, प्रकृतात्पदार्थादन्यः पदार्थः पदार्थान्तरम् । ११ घटादिपदस्फोट । १२ पदार्थप्रतिपत्तिं दर्शयन्त्याचार्याः । १३ पकस्य गकारस्य । १४ उशनसि शब्दे भव औशनसः शुक्र इत्यर्थः । १५ कृत्वा । १६ हेतोः । १७ उत्तरवर्ण । १८ कथम्? तथा हि । १९ वर्णैः । २० परार्थेषु । २१ वासनायाश्चेतनत्वात् । २२ मीमांसक ।

